2-2

वैदिक स्वाध्यायमन्दिर ग्रन्थावलिः

ग्रन्थाङ्कः ७

# ऐतरेयारण्यक-पर्यालोचनम्

अथवा

# ऐतरेयारण्यक आचारविचाराः

---

ग्रन्थकर्ता

विद्यामार्तण्डो कां० वि०

*डाक्टर श्री मङ्गलदेव शास्त्री,*

M. A., M. O. L., D. Phil. ( Oxon ).

२०१० वै० ( सन् १९५३ ) ]

# श्रुतिविमर्शः

## ऐतरेयारण्यके आचारविचाराः

### अथवा

## ऐतरेयारण्यकपर्यालोचनम्

दिव्यं यत्परमं धाम ज्योतीरूपं सनातनम् ।
तन्म आविर्भवत्सद्यस्तमो हार्दं विनाशयेत् ।।

सर्वज्ञाननिधेरतिगम्भीरस्य वैदिकवाङ्मयस्य तत्तद्भागक्रमेण विचारणीयविषयानधिकृत्य प्रबन्धमालारूपेण प्रवृत्तस्यास्य श्रुतिविमर्शस्य ऐतरेयपर्यालोचने नाम प्रथमे निबन्धे ऐतरेयारण्यकवर्जमैतरेयब्राह्मणगता रीति-नीति-स्वर्ग-यज्ञस्वरूप-तत्तद्देवतास्वरूप-तत्तत्पदार्थविज्ञानादि-विषयका विचाराः स्पष्टीकृताः पूर्वमस्माभिः । अस्मिन् खलु द्वितीये निबन्धे तस्यैव ब्राह्मणस्य—

ऐतरेयब्राह्मणेऽस्ति काण्डमारण्यकाभिधम् ।
अरण्य एव पाठ्यत्वादारण्यकमितीर्यते ।।

इत्येवमुपवर्णितमैतरेयारण्यकाख्यं भागमधिकृत्य विचारः प्रस्तूयते । ऐतरेयारण्यके हि आरण्यकाभिधाः पञ्च भागा विद्यन्ते. । तेषां प्रत्येकं विषयविभागः संप्रदायानुसारेणाधः प्रदर्श्यते ।

तत्र गवामयनमित्याख्यस्य संवत्सरात्मकसत्रस्य शेषो महाव्रतनामकं कर्म प्रथमारण्यकस्य विषयः । द्वितीयस्य तृतीयस्य चारण्यकस्य ज्ञानकाण्डं विषयः । सा चोपनिषदित्यभिधीयते । चतुर्थारण्यके[1]ऽरण्याध्ययनार्थाः 'विदा मघवन्' इत्यादयो महानाम्न्याख्यमन्त्राः प्रोच्यन्ते ।

---

१ षड्गुरुशिष्यानुसारेण चतुर्थारण्यकस्य कर्ता आश्वलायनः ।

पञ्चमे त्वारण्यके[१] महाव्रताख्यकर्मण एव प्रयोग उच्यते। तदेवमैतरेयारण्यके प्रथमं चतुर्थं पञ्चमं चारण्यकं कर्मपरम्, द्वितीयं तृतीयं च ज्ञानकाण्डात्मकमित्यवसीयते।

सत्यप्येवम्, प्रस्तुतेऽस्मिन् पर्यालोचने ग्रन्थस्य प्रधानप्रतिपाद्यविषयमपहाय, प्रथमे निबन्ध इव, प्रसङ्गागतास्तदानीन्तनरीतिनीत्यादिपरिचायका विषया एव क्रमेण संगृहीता विमृष्टाश्च नूनं विदुषां मनस्तोषाय ज्ञानवृद्धये च भवेयुरिति त एवात्र संग्रथ्यन्ते।

## (१) वाङ्मनसयोः स्वरूपं महिमा च

"वाचामेव प्रसादेन लोकयात्रा प्रवर्तते॥ इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम्। यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥" (काव्यादर्शे १।३-४) इत्यादिप्रकारेण वर्णिताया वाचः, "मनो वाव वाचो भूयः" (छान्दोग्योपनिषदि ७।३।१), "वाग्वै मनसो ह्रसीयसी" (शतपथब्रा०) इत्येवं वाचोऽपेक्षयापि महीयसो मनसश्च गुणवर्णनाभिव्याप्तं हि वैदिकं वाङ्मयम्। तच्च सर्वथा समुचितमेव। वाचो मनसश्चापरिमितशक्तीनां याथार्थिक उपयोगो वै मनुष्यजीवनस्य वास्तविकसफलतायाः सममेव निदानं रहस्यं च। ततश्चास्मिन्नारण्यकेऽपि तयोर्नानारूपेणोपवर्णनं स्वाभाविकमेव। अत्र हि वाग्विषये "वाक् तन्तिः (=दीर्घा रज्जुः) नामानि दामानि। ...वाचा तन्त्या नामभिर्दामभिः सर्वं सितम् (=बद्धम्)", "अथ खल्वियं सर्वस्यै वाच उपनिषद्", "अथ खल्वियं दैवी वीणा भवति।...एवमसौ शब्दवती", "अथातो वाग्रसः", "अथ हास्मा एतत्कृष्णहारितो वाग्ब्राह्मणमिवोपोदाहरति" इत्यादिवर्णनानि विशेषतो विदुषां रुचये भवेयुरिति प्रतीमः। तथाहि—

वाग्वै धियावसुः। (ऐ० आ० १।१।४)

धियावसुः। बुद्ध्या सर्वानाच्छादयति, बुद्धिप्रदेत्यर्थः (सायणः)। अथवा, वाग्द्वारैव मनुष्यः सर्वान् पदार्थान् बुद्धिविषयान् करोतीत्यर्थः।

मनसि वै सर्वे कामाः श्रिताः, मनसा हि सर्वान् कामान् ध्यायति।
....वाग्वै सर्वान् कामान्दुहे, वाचा हि सर्वान् कामान् वदति। (ऐ०आ० १।३।२)
दुहे दुग्धे संपादयति।

---

१ सायणानुसारेण पञ्चमारण्यकं शौनककर्तृकमित्यवधेयम्।

वाचा हि नामधेयानि धीयन्ते। ( ऐ० आ० १ । ३ । ३ )

वाचो रेतः कर्म। ( ऐ० आ० २ । १ । ३ )

रेतः सारभूतं कार्यम्।

मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति। ( ऐ० आ० ३ । १ । १ )

यावद् ब्रह्म विष्ठितं तावती वाग् ( ऋ० १० । ११४ । ८ ) इति। यत्र ह क्व च ब्रह्म तद्वाग्, यत्र वा वाक् तद्वा ब्रह्मेत्येतदुक्तं भवति। (ऐ०आ० १ । ३ । ८)

यत्र ह क्व च ब्रह्मण्या वागुद्यते तद्वास्य कीर्तिर्भवति। ( ऐ० आ० १ । ५ । २ )

ब्रह्मण्या वाक्। वेदसम्बन्धि वाक्यम् ( सायणः )। अस्य यजमानस्य, विदुषो वा।

...तस्माद्‌ सा वाक् समानायतना प्राणैः सत्यननुषक्ता। ( ऐ० आ०१।५।२ )

प्राणैः। शिरश्छिद्रगतैः सप्तभिः प्राणैरित्यर्थः। 'सप्त वै शीर्षन् प्राणाः' इत्यस्य प्रकृतत्वात्। अननुषक्ता असङ्कीर्णा।

तस्य वाक् तन्तिर्नामानि दामानि। तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्। सर्वं हीदं नामनी ३। सर्वं वाचाभिवदति। ( ऐ० आ० २।१।६ )

तस्य प्राणस्य। तन्तिः काचिद्दीर्घा रज्जुः। दामानि दीर्घायां रज्जौ तत्तत्पशुबन्धनार्थाः पाशाः। तथा च, बहुपशुबन्धनार्थायां रज्जौ यथा प्रत्येकं बन्धनाय पृथक् पाशा भवन्ति तथैव वाक्सामान्यरूपायां दीर्घतन्त्यां नामविशेषरूपाणि दामानि सन्ति। तत्तस्मादस्य प्राणस्य सम्बन्धिन्या वाक्सामान्यरूपया दीर्घतन्त्या नामविशेषरूपैर्दामभिः सर्वमिदं जगत् सितं बद्धम्। अत एव रज्जुबन्धनेनाकृष्यमाणमिव तत्तन्नाम्नाभिधीयमानं सर्वं पदार्थजातं मनुष्यस्य पुरस्तादुपतिष्ठत इव।

सर्वं हीदं नामनी ३ सर्वं वाचाभिवदति। ( ऐ० आ० २।१।६ )

सर्वं जगदभिधेयरूपम् अभिधायके नामनि व्यवस्थितमिति लोकप्रसिद्धमेतत्। अत एव मनुष्यः सर्वमपि वस्तु उद्दिश्य वाचा तत्तन्नाम्ना अभिवदति।

अकृत्स्नो ह्येष आत्मा यद्वाक्। अभि हि प्राणेन मनसेऽऽयमानो वाचा नानुभवति।
( ऐ० आ० २।३।५ )

अयं भावः—वाचा हि नहि कश्चित् कात्स्न्येंन स्वाभिप्रायमाविष्कर्तुं शक्नोति । अत एव प्राणेन मनसेऽस्यमानो विचारप्रवाहे प्रवर्तमानो मनुष्यो वाचा साकल्येन तत्प्रकटीकरणाय न कल्पते ।

सत्यं वै वागृचा स्पृष्टा । ( ऐ० आ० २।३।६ ) .

स्पृष्टा संयुक्ता ।

अकारो वै सर्वा वाक्, सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति । तस्यै यदुपांशु स प्राणः, अथ यदुच्चैस्तच्छरीरम् । तस्मात्तिर इव, तिर इव ह्यशरीरम्, अशरीरो हि प्राणः । अथ यदुच्चैस्तच्छरीरम्, तस्मात्तदाविः, आविर्हि शरीरम् ।
(ऐ० आ० २।३।६ )

तस्यै । अकाररूपायास्तस्या वाचः । तिर इव । तिरोहितमिव । आविः । आविर्भूतम् ।

वाचा वै वेदाः संधीयन्ते, वाचा छन्दांसि, वाचा मित्राणि संदधति, वाचा सर्वाणि भूतानि, अथो वागेवेदं सर्वमिति । तद्यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति वाक्तदा प्राणं रेळिह । अथ यत्र तूर्ष्णीं वा भवति स्वपिति वा प्राणे तदा वाग्भवति प्राणस्तदा वाचं रेळिह । तावन्योन्यं रीळ्हः । वाग्वै माता प्राणः पुत्रः ।
( ऐ० आ० ३।१।६ )

संधीयन्ते पठ्यन्ते । वाचा छन्दांसि प्रयुज्यन्ते । वाचा प्रियोक्त्या मित्राणि संदधति संयुक्ता भवन्ति । स्निग्धा भवन्तीति भावः । सर्वाणि भूतानि । सर्वेऽपि प्राणिनः । अथो अपि च वागेवेदं सर्वमैहिकामुष्मिकं फलजातं संपादयति । राजसेवादौ प्रियभाषणेन धनलाभात्, मन्त्रजपादिना स्वर्गादिसिद्धेश्च ।

अधीते वेदवाक्यम् । भाषते लौकिकीं भाषाम् । रेळिह ग्रसति । रीळ्हः कालभेदेन ग्रसतः । अयं भावः—वाग्व्यापारे उच्छ्वासनिःश्वासरूपः प्राणव्यापारो न दृश्यते; तदभावे तु प्राणव्यापारो दृश्यते, न वाग्व्यापारः ।

( वाच उपनिषद् )

अथ खल्वियं सर्वस्यै वाच उपनिषत् । सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषदः, इमां त्वेवाचक्षते । पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वराः । अग्ने रूपं स्पर्शा वायोरूष्माण आदित्यस्य स्वराः । ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः

सामवेदस्य स्वराः। चक्षुषो रूपं स्पर्शाः श्रोत्रस्योष्माणो मनसः स्वराः। प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः। (ऐ० आ० ३।२।५)।

उपनिषदुपासना। सर्वस्यै वाचः। अकारादिक्षकारान्तायाः सर्वस्या वाचः।

(दैवी वीणा)

अथ खल्वियं दैवी वीणा भवति; तदनुकृतिरसौ मानुषी वीणा भवति। यथास्याः शिर एवममुष्याः शिरो यथास्या उदरमेवममुष्या अम्भणं यथास्यै जिह्वैवममुष्यै वादनं यथास्यास्तन्त्रय एवममुष्या अङ्गुलयो यथास्याः स्वरा एवममुष्याः स्वरा यथास्याः स्पर्शा एवममुष्याः स्पर्शा यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती यथा ह्येवेयं लोमशेन चर्मणापिहिता भवत्येवमसौ लोमशेन चर्मणापिहिता। लोमशेन ह स्म वै चर्मणा पुरा वीणा अपिदधति। स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति भूमिप्रास्य कीर्तिर्भवति यत्र क चार्या वाचो भाषन्ते विदुरेनं तत्र। (ऐ० आ० ३।२।५)।

इयम् अस्माभिर्दृश्यमाना शरीररूपा। दैवी देवनिर्मिता। असौ मानुषी वीणा। मनुष्यनिर्मिता गायकैर्धार्यमाणा काष्ठमयी वीणा। अम्भणं वीणादण्डमध्यवर्त्ति मध्यच्छिद्रम्। अमुष्याः शरीरवीणायाः। स्वराः। एकत्र षड्जादयोऽपरत्र अकारादिस्वराः। अथवा उभयत्र षड्जादय एव स्वराः। स्पर्शाः। एकत्र ककारादिव्यञ्जनानि, अपरत्र अङ्गुलिस्पर्शाः। अथवा एकत्र शरीरमध्ये वायोः स्पर्शविशेषाः, अपरत्र अङ्गुलिस्पर्शाः। तर्द्मवती दृढबन्धनयुक्ता। तर्दनं दृढबन्धनम्। तच्चैकत्र शरीरावयवानाम्, अपरत्र तन्त्रीणाम्। लोमशेन प्रभूतरोमाधारेण। अपिहिता आच्छादिता। पुरा पूर्वकाले। श्रुतवदनः सर्वजनश्रोत्रप्रियं वदनमुक्तिर्यस्यासौ। भूमिप्रा भूमेः पूरयित्री।

(वाग्रसः)

अथातो वाग्रसः। यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचिषेत तत्रैतामृचं जपेत्।

ओष्ठापिधाना नकुली दन्तैः परिवृता पविः।
सर्वस्यै वाच ईशाना चारु मामिह वादयेत्॥

इति वाग्रसः। (ऐ० आ० ३।२।५)

वाग्रसः। वाचः सारभूतो मन्त्रः। न विरुरुचिषेत। विशेषेण रुचिकरः सर्वजनानां रञ्जको यदि न भवेत्। पविर्वज्रवत्तीक्ष्णा। नकुली। नकुलीव नकुली, अतीव चपला तीक्ष्णा वा जिह्वा। तया च वाग्देवतोपलक्ष्यते।

(वाग्ब्राह्मणम्)

अथ हास्मा एतत्कृष्णहारितो वाग्ब्राह्मणमिवोपोदाहरति। प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः। स च्छन्दोभिरात्मानं समदधाद्यच्छन्दोभिरात्मानं समदधात्तस्मात्संहिता। तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा। स यो हैतौ णकारषकारावनुसंहितमृचो वेद सबलां सप्राणां संहितां वेद; आयुष्यमिति विद्यात्। स यदि विचिकित्सेत् सणकारं ब्रवाणी३ँ अणकारा३ँ इति सणकारमेव ब्रूयात् सषकारं ब्रवाणी३ँ अषकारा३ँ इति सषकारमेव ब्रूयात्। ते यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारा उपाप्ताविति ह स्माह ह्रस्वो माण्डूकेयः। अथ यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारा उपाप्ताविति ह स्माह स्थविरः शाकल्यः। (ऐ० आ० ३।२।६)

अस्मै पुत्राय शिष्याय वा। वाग्ब्राह्मणम्। वाग्विषयकं ब्राह्मणं ब्राह्मणवाक्यम्। संवत्सरः प्रजापतिः। कालात्मकः परमेश्वरः (सायणः)। व्यस्रंसत श्रमेण विस्रस्तावयवोऽभूत्। आत्मानं समदधात्। स्वावयवपाटवं संपादितवानित्यर्थः। तदेतद् आयुष्यमिति विद्यात्। सानुनासिकं प्लुतद्वयं विचारार्थम्। माण्डूकेयीयमध्यायम्। पदपाठक्रमपाठसंहितापाठविषयकं माण्डूकेयेन शूरवीरेण प्रोक्तमस्यैवारण्यकस्य भागविशेषमध्यायम्। प्रब्रूमः पठामः। णकारषकारौ बलप्राणरूपौ।

स वा एष वाचः परमो विकारो यदेतन्महदुक्थम्। तदेतत्पञ्चविधम्—मितममितं स्वरः सत्यानृते इति। ऋग्गाथा कुम्ब्या तन्मितम्, यजुर्निगदो वृथावाक् तदमितम्, सामाथो वः कश्च गेष्णः स स्वरः, ओ३मिति सत्यम्, नेत्यनृतम्।

(ऐ० आ० २।३।६।)

महदुक्थं प्रौढं शस्त्रम्। "सर्वलोकप्रसिद्धार्थप्रतिपादिका 'प्रातः प्रातरनृतं ते वदन्ति' इत्यादिका गाथा। आचारशिक्षारूपा कुम्ब्या। तद्यथा ब्रह्मचार्यस्यपोऽशान, कर्म कुरु, दिवा मा स्वाप्सीरित्यादि" इति सायणः। "ब्राह्मणगता येऽर्थवादाः, या च राजसभादौ परिहासा-

दिरूपेणोच्यते सा सर्वा वृथावाग्" इति सायणः। "गेष्णः साममागः; सामगैः पर्वशब्देन व्यवह्रियमाणः" इति सायणः।

ब्रह्म वै हिङ्कारः।....वृषा वै हिङ्कारो योषर्क्, तन्मिथुनम्। मिथुनमेव तदुक्थमुखे करोति प्रजात्यै।....यथा वा अभ्रिरेवं ब्रह्मणो हिङ्कारः। यद्वै किञ्चाभ्रियाभितितृत्स-त्यस्यैवैतद् तृणत्त्येवम्। यं कामं कामयते हिङ्कारेणाभ्येवैनं तृणत्ति य एवं वेद। ....वाचो वा एषा व्यावृत्तिर्दैव्यै च मानुष्यै च यद्धिङ्कारः। स यद्धिङ्कृत्य प्रतिपद्यते वाचमेव तद्व्यावर्तयति दैवीं च मानुषीं च। (ऐ० आ० १।३।१)

उक्थमुखे शस्त्रप्रारम्भे। अभ्रिः खननहेतुः काष्ठविशेषः। ब्रह्मणो वेदस्य। हिङ्कारो हिं निधिस्थानीयस्य वेदसारस्य खननहेतुः। अभितितृत्सति। सर्वतस्तर्दितुं खनितुमिच्छति। अभितृणत्त्येव। सर्वथा खनत्येव। स्तोत्रशस्त्रादिरूपा वैदिकी वाग्दैवी। अशनाच्छादनादि-विषया लौकिकी वाग्मानुषी। एतस्या द्विविधाया वाचः परस्परव्यावृत्तिहेतुर्हिङ्कारः। स हिं दैव्यां वाचि प्रयुज्यते, न तु मानुष्याम्।

भूर्भुवः स्वरित्येता वाव व्याहृतयः। इमे त्रयो वेदाः। भूरित्येव ऋग्वेदो भुव इति यजुर्वेदः स्वरिति सामवेदः। (ऐ० आ० १।३।२)

एतां वाव प्रजापतिः प्रथमां वाचं व्याहरदेकाक्षरद्व्यक्षरां ततेति तातेति। तथैवै-तत्कुमारः प्रथमवादी वाचं व्याहरत्येकाक्षरद्व्यक्षरां ततेति तातेति। (ऐ०आ०१।३।३)

एकाक्षरद्व्यक्षराम्। एकेन ह्रस्वेनाक्षरेणोपेता एकाक्षरा, द्वाभ्यां ह्रस्वदीर्घाभ्यामक्षराभ्या-मुपेता द्व्यक्षरा। (सायणः)

मूर्धा लोकानामसि वाचो रसस्तेजः प्राणस्यायतनं मनसः। संवेशश्चक्षुषः संभवः श्रोत्रस्य प्रतिष्ठा हृदयस्य सर्वम्॥ १॥ इन्द्रः कर्माक्षितममृतं व्योम ऋतं सत्यं विजिज्ञानं विवाचनम्। अन्तो वाचो विभुः सर्वस्मादुत्तरं ज्योतिरूधरप्रतिवादः पूर्वम्॥ २॥ सर्वं वाक्परागर्वाक्सप्रु सलिलं धेनु पिन्वति चक्षुः श्रोत्रं प्राणः। सत्य-संमितं वाक्प्रभूतं मनसो विभूतं हृदयोग्रं ब्राह्मणमर्तृकम्॥ ३॥...एतास्त उक्थ भूतय एता वाचो विभूतयः। तामिमं इह धुक्ष्वामृतस्य श्रियं महीम्॥ ४॥ प्रजा-

पतिरिदं ब्रह्म वेदानां ससृजे रसम् । तेनाहं विश्वमाप्यासं सर्वान्कामान्दुहां महत् ॥ ५ ॥......ब्रह्म प्रजां मे धुक्ष्व । आयुः प्राणं मे धुक्ष्व । पशून् विशं मे धुक्ष्व । श्रियं यशो मे धुक्ष्व । लोकं ब्रह्मवर्चसमभयं यज्ञसमृद्धिं मे धुक्ष्व । ( इति वाचयत्यध्वर्युमबुद्धं चेदस्य भवति । ) ( ऐ० आ० ५।३।२ )

निष्केवल्यनामकमुक्थं संबोध्य मन्त्रा इमे पठिताः सन्ति । विजिग्यानं विजयशी राजादिकम् , विजयो वा । विवाचनं विशेषेण वक्तुं समर्थम्, विनिर्णयो वा । ऊधो गवां स्तनसमूहः । अप्रतिवादो विद्वत्कथायां प्रतिवाद्युक्तिराहित्यम् । पूर्वं कारणम् । परागर्वाग् उत्तमाधमरूपा या वाक् । सप्रु नानाविधविद्युद्भिः सहितम् । सलिलं वृष्ट्युदकम् । धेनु पिन्वति । यथा धेनुः क्षीरप्रदानेन तद्वत् प्रीणयति । हृदयोग्रं हृदयसम्बन्धि यदुग्रं कर्म । ब्राह्मणभर्तृकं ब्राह्मणाः पोषका यस्य तत् । आप्यासं प्राप्तो भूयासम् । दुहां संपादयामि । धुक्ष्व संपादय । इति वाचयतीत्यादि । अस्याध्वर्योरिदं मन्त्रस्वरूपमबुद्धं चेदनवगतं यदि भवति तदा होता पाठयेत् । अवगतत्वे तु स्वयमेव जपेदित्यर्थः ।

## (२) स्वाध्यायधर्मा अध्यापननियमाश्च

विद्या ह वै ब्राह्मणमाजगाम
गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय
न मा ब्रूया वीर्यवती तथा स्याम् ॥

अध्यापिता ये गुरुं नाद्रियन्ते
विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीया-
स्तथैव तान्न भुनक्ति श्रुतं तत् ॥ ( निरुक्ते २।४ )

इत्यादिश्रुतीरनुसरता हि यास्केन निरुक्ते प्रतिपाद्यते–"नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया । उपसन्नाय तु निर्ब्रूयात् । यो वालं विज्ञातुं स्यात् । मेधाविने तपस्विने वा ।" ( नि० २।३ ) इति । तदेवं विद्यायाः साफल्यार्थं स्वाध्यायमध्यापनं वा कुर्वता नूनं स्वीयनियमा व्रताचरणमिवावश्यं पालनीयाः । समुचितायां भूमौ समुचितकालादिविचारेणैवोप्तं बीजं काले सफलतां लभते । अत एव स्वाध्यायविषयेऽध्यापनविषये च बहुविधाः सारगभीरा अर्थाः प्रतिपाद्यन्ते यत्र तत्र अस्मिन्नारण्यकेऽपि । प्रसङ्गेनाध्ययनाध्यापनयोर्महिमाप्युपवर्ण्यते चित्ताकर्षकेण प्रकारेण । तथा हि—

अथातः स्वाध्यायधर्मं व्याख्यास्यामः । उप पुराणे नापीते कक्षोदके, पूर्वाह्णे न संभिन्नासु च्छायास्वपराह्णे, नाध्यूळ्हमेघे, अपर्तौ वर्षे त्रिरात्रं वैदिकेनाध्यायेनान्तरियात् । नास्मिन्कथां वदेत, नास्य रात्रौ च, न च कीर्तयिषेत् । ( ऐ० आ० ५ । ३ । ३ )

कृत्स्नवेदाध्ययननियमा अत्र व्याख्याताः । 'उप पुराणे' इत्यादिवाक्येन पौष्याः पौर्णमास्या उपरितनः काल उपलक्ष्यते । तथाहि–'पुराणे कक्षोदके उपापीते' सति नाधीयीतेति वाक्ययोजना । कक्षशब्देन लतादिपुञ्जमभिधीयते । तस्य मूले वृष्टिकालसंपादितमुदकं द्रवरूपेण किंचित्कालमनुवृत्तं सत्पौषादिमासेषु प्रायेण शुष्यति तदिदमत्राभिधीयते । 'पुराणे' पूर्वसंपादिते 'कक्षोदके' 'उपापीते' लतादिमूलसमीपे विलीने शुष्के सति नाधीयीत ।

तथा च मनुना स्मर्यते—

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ॥ इति ( सायणः ) ।

पूर्वाह्णेऽपराह्णे च शरीरवृक्षादीनां छायासु संभिन्नासु मिलितासु सतीषु नाधीयीत । अध्यूढः । आधिक्येन प्रसृतः सान्द्रः । अपर्तौ वर्षे । अकालवृष्टौ । वैदिकेनाध्यायेनान्तरियात् । वेदपाठस्यान्तरायः कर्तव्यः । 'अस्मिन्' अधीयमाने स्वाध्याये । कथां लौकिकीं वार्ताम् । 'अस्य' महाव्रतस्य पाठं 'रात्रौ न' कुर्यात् । किंच महाव्रताभिज्ञोऽहमिति एवं जनमध्ये कीर्तिमपि नेच्छेत् (सायणः) । अथवा 'अस्य' इत्यनेन सामान्येन वेदपाठमात्रमेवाभिप्रेतं स्यात् ।

वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम्। आविराविर्म एधि। वेदस्य म आणी स्थः। श्रुतं मे मा प्रहासीः। अनेनाधीतेनाहोरात्रान्संदधामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु तद्वक्तारमवतु। अवतु मामवतु वक्तारम्। ( ऐ० आ० २।७।१ )

वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम्। अनयोरन्योन्यानुकूल्यमस्त्वित्येवं प्रार्थ्यते। आविः स्वप्रकाशं ब्रह्मचैतन्यम्। आवीरेधि प्रकटीभव। आणी आनयनसमर्थे ( सायणः )। मा प्रहासीः। मा परित्यजतु ( सायणः )। अनेनाधीतेन अहोरात्रान् संदधामि। अहनि रात्रौ चालस्यं परित्यज्य निरन्तरं पठामीत्यर्थः। वक्तारमाचार्यम्।

सुपर्णोऽसि गरुत्मान्। प्रेमां वाचं वदिष्यामि बहु वदिष्यन्तीं बहु पतिष्यन्तीं बहु करिष्यन्तीं बहु सनिष्यन्तीं बहोर्भूयः करिष्यन्तीं स्वर्गच्छन्तीं स्वर्वदिष्यन्तीं स्वः पतिष्यन्तीं स्वः करिष्यन्तीं स्वः सनिष्यन्तीं स्वरिमं यज्ञं वक्ष्यन्तीं स्वर्मां यजमानं वक्ष्यन्तीमिति।

( ऐ० आ० ५।१।५ )

सुपर्णोऽसि गरुत्मानिति यागनिर्वाहकं पक्ष्याकारं चैत्याग्निं संबोध्य उच्यते। इमाम्। शस्त्रशंसनादिरूपाम् ( सायणः )। बहु पतिष्यन्तीम्। बहुधा पारलौकिकफलं प्रापयिष्यन्तीम् ( सायणः )। सनिष्यन्तीं दास्यन्तीम्।

नादीक्षितो महाव्रतं शंसेन्नानग्नौ न परस्मै नासंवत्सर इत्येके। कामं पित्रे वाचार्याय वा शंसेदात्मनो हैवास्य तच्छस्तं भवति।........

तदिदमहर्नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नो एवासंवत्सरवासिने नाब्रह्मचारिणे नासब्रह्मचारिणे नो एवासब्रह्मचारिणे नानभिप्रापयैतं देशम्। न भूयः सकृद्वदनाद् द्विर्वदनाद्वा, द्व्येव। एक एकस्मै प्रब्रूयादिति ह स्माह जातूकर्ण्यः। न वत्से च न तृतीय इति। न तिष्ठंस्तिष्ठते न व्रजन्व्रजते न शयानः शयानाय नोपर्यासीन उपर्यासीनाय। अध एवासीनोऽध आसीनाय। नावष्टब्धो न प्रतिस्तब्धो नातिवीतो नाङ्कं कृत्वोर्ध्वंज्ञुरनपश्रितोऽधीयीत। न मांसं भुक्त्वा न लोहितं दृष्ट्वा न गतासुं नाग्रत्यमाक्रम्य नाक्त्वा नाभ्यज्य नोन्मर्दनं कारयित्वा न नापितेन कारयित्वा न स्नात्वा न वर्णकेनानुलिप्य न स्रजमपिनह्य न स्त्रियमुपगम्य नोल्लिख्य नावलिख्य। नेदमेकस्मिन्नहनि

समापयेदिति ह स्माह जातूकर्ण्यः, समापयेदिति गालवः, यदन्यत्प्राक्तृचाशीतिभ्यः समापयेदेवेत्याग्निवेश्यायनोऽन्यमन्यस्मिन्देशे शमयमान इति । यत्रेदमधीयीत न तत्रान्यदधीयीत, यत्र त्वन्यदधीयीत काममिदं तत्राधीयीत । नेदमनधीयन्स्नातको भवति, यद्यप्यन्यद्बह्वधीयान्नैवेदमनधीयन्स्नातको भवति । नास्मादधीतात्प्रमाद्येद्यद्यप्यन्यस्मात्प्रमाद्येन्नैवास्मात्प्रमाद्येन्नो एवास्मात्प्रमाद्येत् । अस्माच्चेन्न प्रमाद्येदलमात्मन इति विद्यात् । अलं सत्यं विद्यात् । नेदविदनिदंविदा समुद्दिशेन्न सह भुञ्जीत न सधमादी स्यात् ।

(ऐ० आ० ५ । ३ । ३)

नादीक्षित इत्यादिना 'महाव्रत'-शंसने नियमविशेषान् दर्शयित्वा 'तदिदमहः' इत्यादिना तदध्यापने नियमान् दर्शयति । तदेतत् सर्वं सामान्येन पालनीयनियमानपि संकेतयति । 'एतं देशम्' आचार्यो यस्मिन् देशे निवसति तम् । सकृद् गदनम् एकस्मिन् पर्याये शिष्याणामध्यापनम् । द्वय्येव द्विविधैव । द्विवारमेवाध्यापनमित्यर्थः । वत्से बाले । तृतीये आयुषस्तृतीयामवस्थामापन्ने । 'अध एव' भूमावेव 'आसीनोऽध आसीनाय' ब्रूयात् । पृष्ठभागे कुड्याद्याश्रयणमवष्टम्भः । पुरोभागे हस्तयोर्दण्डाद्याधाराश्रयणं प्रतिस्तम्भनम् । वस्त्रेण सर्वाङ्गपिधानमतिवीतत्वम् । पद्मासनादिकमङ्ककरणम् । ऊर्ध्वज्ञुः । जानुद्वयमूर्ध्वं कृत्वा अधीयीत । अनपश्रितः । योगपट्टवस्त्राद्याश्रयरहितः । अत्रत्यमाक्रम्य । उच्छिष्टाद्याक्रम्य । नापितेन कारयित्वा । नखनिकृन्तनं क्षौरं वा कारयित्वा । स्नात्वा । उष्णोदकेन स्नात्वेति सायणः । वर्णकेनानुलिप्य । चन्दनकुङ्कुमादिनानुलिप्य । उल्लिख्य । लिप्यक्षराद्युल्लिख्येति सायणः । अवलिख्य । लिप्यक्षराद्युल्लेखनस्य विनाशनादि कृत्वेति सायणः । इदं महाव्रताध्ययनम् । अन्यमुत्तरभागम् । शमयमानः समापयन् । प्रमाद्येत् प्रज्ञामान्द्यादिदोषेण तद्विस्मृतिं प्राप्नुयात् । 'आत्मनः' पुरुषार्थाय तदधीतम् 'अलमिति' विद्यात् । समुद्दिशेत् । वार्तालापादिव्यवहारं कुर्यात् । सधमादी । (तेनानिदंविदा) सह हर्षादिविनोदवान् ।

ता एताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नाप्रवक्त्र इत्याचार्या आचार्याः । (ऐ० आ० ३ । २ । ६)

अप्रवक्त्रे । यः प्रवचनं शिष्योपदेशं न करोति तादृशाय ।

## (३) सत्यभाषणादिगुणानां प्रशंसा, अनृतस्य निन्दा च

"अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्। इदमहमनृतात् सत्यमुपैमि" (यजु० १।५), "मा भेः, मा संविक्थाः" (यजु० १।२३), "स नो मुञ्चत्वंहसः" (अथ० ४।२३-२४) इत्यादिश्रुतिषु सत्यभाषणनिर्भयतादिगुणानां प्रशंसा, अनृतवादिपाप्मनश्च निन्दा असकृच्छ्रूयते। अस्मिन्नारण्यकेऽपि स एवार्थो हृदयंगमैः शब्दैः प्रतिपाद्यते। तथा हि–

तदेतत्पुष्पं फलं वाचो यत्सत्यम्। स हेश्वरो यशस्वी कल्याणकीर्त्तिर्भवितोः, पुष्पं हि फलं वाचः सत्यं वदति। अथैतन्मूलं वाचो यदनृतम्। तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्त्तते, एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्त्तते। तस्मादनृतं न वदेत्, दयेत त्वेनेन। (ऐ० आ० २।३।६)

भवितोरीश्वरः। भवितुं प्रभुर्भवति। मूलम्। पुष्पफलविपरीतत्वमात्रमत्र मूलत्वम्। आविर्मूलः। भूमेरुत्खातः सन्नाविर्भूतमूलः। उद्वर्तते विनश्यति। दयेत त्वेनेन। अनृतवदनेन निमित्तेन स्वात्मानं रक्षेत्।

नाधृष आ दधर्ष दाधृषाणम्। (ऐ० आ० ५।२।१)

वस्तुत इन्द्रसंबन्धिनीयमृक्। तस्या एष भागः सामान्यमर्थमप्यभिधातुं शक्नोति। तथा हि। 'अधृषः' केनापि तिरस्कर्तुमशक्योऽपि वैरी 'दाधृषाणम्' अतिशयेन तिरस्कर्तारं 'ना दधर्ष' नैव तिरस्करोति।

न सोमो अव्रतं हिनोति, न स्पृशद्रयिः। (ऐ० आ० ५।२।२)

सोमो देवता अव्रतं न 'हिनोति' प्रीणयति। रयिर्धनमपि तं न 'स्पृशत्' प्राप्नोति।

## (४) दानमातिथ्यं च

दानस्यातिथ्यस्य च सामान्येन कर्तव्यत्वं श्रैष्ठ्यं चाभ्युपगच्छदपि एतदारण्यकं तयोस्तत्तत्प्रसङ्गे युक्तायुक्तत्वविचारपूर्वकमेवानुष्ठानं वरमिति स्पष्टमभिदधाति। तत्रातिथ्यस्य

विषये—"यः श्रेष्ठतामश्नुते स वा अतिथिर्भवति। न वा असन्तम् (=सन्मार्गरहितम्) आतिथ्यायाद्रियन्ते" इत्येतत्कथनम्, दानस्य च विषये "तस्मात्काल एव दद्यात् काले न दद्यात्" इत्येतद्विधानं चास्य वैशिष्ट्यमेकं संपादयति। तथा हि—

ईश्वरोऽतिथिरेव चरितोः। (ऐ० आ० १।१।१)

ईश्वरः प्रभुः। चरितोश्चरितुम्। स्थानात्स्थानान्तरं गन्तुमित्यर्थः।

यो वै भवति यः श्रेष्ठतामश्नुते स वा अतिथिर्भवति। न वा असन्तमातिथ्यायाद्रियन्ते। (ऐ० आ० १।१।१)

यो वै भवति। यस्तु पुमान् सन्मार्गवर्ती भवति। सत्तावाची भूधातुः सन्मार्गवर्तिनं ब्रूत इति सायणः, तद्यथा सत्पुरुषादिशब्दे अस्धातुरपि। असन्तं सन्मार्गरहितम्।

अकृता वै सापचितिर्यामपश्यते करोति।''''अकृता वै सापचितिर्यामध्युष्टाय करोति, ''''एषा वा अपचितिर्यां पश्यते करोति। (ऐ० आ० १।२।४)

अपचितिः पूजा समादरो वा। अध्युष्टाय। अधिकत्वेन समीपं प्राप्ताय। तदर्थं कृताप्यपचितिः कालातिक्रमेण अकृतैव भवति।

न तस्येशे यन्नाद्याद् यद्वैनं नाद्युः। (ऐ० आ० २।१।२)

यः कृपणतया वित्तादिकं न स्वयं भुङ्क्ते न चान्येभ्यो ददाति स वस्तुतस्तस्य वित्तादेर्न स्वामी भवतीति भावः। तथा चाहुः—

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥

पराग्वा एतद्रिक्तमक्षरं यदेतदो३मिति। तद् यत्किंचोमित्याहात्रैवास्मै तद्रिच्यते। स यत्सर्वमों कुर्याद्रिञ्च्यादात्मानं स कामेभ्यो नालं स्यात्। अथैतत्पूर्णमभ्यात्मं यन्नेति। स यत्सर्वं नेति ब्रूयात्पापिकास्य कीर्तिर्जायेत, सैनं तत्रैव हन्यात्। तस्मात्काल एव दद्यात् काले न दद्यात्, तत्सत्यानृते मिथुनीकरोति। तयोर्मिथुनात्प्रजायते भूयान्भवति। (ऐ० आ० २।३।६)

लोकव्यवहारदृष्ट्या केवलमोङ्कारं केवलं नकारं च श्रुतिरत्र निन्दति। पराग्बहिर्मुखम्। रिक्तं भोग्यशून्यम्। अस्मै। याचकादीन्प्रति 'ओम्' इत्येवं स्वकीयद्रव्यदानं स्वीकुर्वते पुरुषाय। रिच्यते रिक्तं भवति। रिञ्च्यादात्मानं रिक्तं सर्वधनशून्यं कुर्यात्। कामेभ्यो भोगेभ्यः। अभ्यात्मं पूर्णम्। आत्मानं धनस्वामिनमभिलक्ष्य धनसंप्राप्तिहेतुत्वात्पूर्णम्। सर्वम्। याच्यमानम्। काले दानयोग्यकाले दद्यात्। काले दानायोग्यकाले न दद्यात्। सत्यानृते मिथुनीकरोति। "ओ३मिति सत्यं नेत्यनृतम्" (ऐ० आ० २। ३। ६) इति श्रुतेरोङ्काररूपं सत्यं नकाररूपमनृतं च मिलित्वा युग्मं करोति। प्रजायते प्रकृष्टो भवति। भूयान् भवति। अधिकतरमुत्कर्षमवाप्नोति।

## (५) मनुष्यजीवनस्यादर्शा उद्देश्यानि वा

कामं कामनाप्रधानो वै मनुष्यः। तत्तत्कामनया प्रेरितो हि स तत्तत्कार्ये प्रवर्तते। ततश्च "विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः" इत्येषा स्थितिस्तस्य प्रायेण दुर्लभैव। तत्र तासां कामनानामुदात्तभावनारूपेण परिवृत्तिरेव मनुष्यजीवनस्याभ्युन्नत्यै सरलः स्वाभाविकश्च मार्गो यत्र तत्र वैदिकवाङ्मये प्रदर्श्यते। उत्तरोत्तरं समुन्नतिरेव—

"उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम्।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥" (यजु० २०। २१)

इत्यादिश्रुतिषु मनुष्यजीवनस्य लक्ष्यत्वेन गीयते। अत्रारण्यकेऽपि वस्तुतः समुन्नतिकामेन मनुजेन किं किमभिलषणीयमिति मनुष्यस्वभावस्य वर्णनेन सहैव सम्यक् प्रतिपाद्यते। तथा हि—

अग्निरिवानाधृष्यः पृथिवीव सुषदा भूयासम्। अन्तरिक्षमिवानाप्यं द्यौरिवानाधृष्यो भूयासम्। सूर्य इवाप्रतिधृष्यश्चन्द्रमा इव पुनर्भूर्भूयासम्। मन इवापूर्वं वायुरिव श्लोकभूर्भूयासम्। अहरिव स्वं रात्रिरिव प्रियो भूयासम्। गाव इव पुनर्भुवो मिथुनमिव मरीचयो भूयासम्। आप इव रस ओषधय इव रूपं भूयासम्। अन्नमिव विभु यज्ञ इव प्रभूर्भूयासम्। ब्रह्मेव लोके क्षत्रमिव श्रियां भूयासम्। (ऐ० आ० ५। १। १)

सुषदाः । शोभनं सदोऽवस्थानं यस्य सः । पुनर्भूः । शत्रुणा तिरस्कारेऽपि पुनरप्यूर्जितः । अपूर्वम् । उत्तरोत्तराभिवृद्धया नूतनम् । श्लोकमूर्भूयासम् । श्लोकः संघः । यथा वायुः स्वयमुत्पद्य उत्तरोत्तराभिवृद्धया संघरूपो भवति, एवमहमपि पुत्रपौत्रादिसंघ-रूपेणोत्पन्नो भूयासम् । स्वं धनम् । पुनर्भुवः । संवत्सरे संवत्सरे वत्सरूपेण पुनरुत्पत्तिमत्यः । मरीचयः । मरीचिमांस्तेजस्वी । रसो रसवान् । रूपं रमणीयरूपयुक्तः ।

**स एष पुरुषः समुद्रः, सर्वं लोकमति । यद्ध किंचाश्नुतेऽत्येनं मन्यते ।**

**( ऐ० आ० २ । ३ । ३ )**

समुद्रः समुद्ररूपः । यथा नद्यादिजलैः समुद्रस्य पूर्णता न संपद्यते, तथैव कस्यापि भोग्यपदार्थस्य प्राप्त्या मनुष्यस्य तृप्तिरसंभवा । अति । अतिक्रम्य वर्तते । तदुच्यते "समुद्र इव हि कामः । नैव हि कामस्यान्तोऽस्ति न समुद्रस्य" इति । अश्नुते व्याप्नोति । भोग्यत्वेन प्राप्नोतीति वा । मन्यते कामयते ।

**यथाप्रज्ञं हि संभवाः । ( ऐ० आ० २ । ३ । २ )**

संभवा अनुभवाः । अत्र सृष्टौ प्राणभृतामनुभवास्तेषां प्रज्ञापरिपाकानुसारेणैव भवन्तीति भावः । अथवा संभवा जन्मानि । अत्रार्थे प्राणिनां जन्मपरम्परासु क्रमेण जायमान-प्रज्ञाविकासानुरूपमेव जन्मानि भवन्तीति भावो ग्रहीतव्यः ।

**शान्तिर्वै प्रतिष्ठा । ( ऐ० आ० १ । १ । ३ )**

शान्तिः । अनिष्टशान्तिः ।

**सर्वे वै कामा मधु । ( ऐ० आ० १ । १ । ३ )**

स्वभावतो मधुरूपाः, प्रिया इति भावः ।

**अन्तो वै महत् । ( ऐ० आ० १ । ५ । ३ )**

अन्तः । अवसानभूमिः । नहि महत्त्वादूर्ध्वं किंचित्प्रार्थनीयं भवति ।

**अन्तो वै धिषणा ( ऐ० आ० १ । ५ । ३ )**

धिषणा बुद्धिः । अन्तः पर्यवसानभूमिः । सर्वस्य व्यवहारस्य बुद्ध्यधीनत्वात् ।

**तस्मात् ( लोके ) पुरुषः पुरुषमाह—वि वा अस्मासु राजसि ग्रीवा वै धारयसीति; स्तभमानं वा । ( ऐ० आ० १ । ४ । १ )**

ग्रीवाः ग्रीवावयवान्। स्तभमानं प्रणिपातादिविनयरहितमुत्कन्धरं स्तब्धं पुरुषम्। तथा च 'वि वा अस्मासु राजसि ग्रीवा वै धारयसि' इत्येष प्रयोगः श्रुताध्ययनादिना विशिष्टं प्रति स्तुतिरूपः। अविनीतपुरुषं प्रति तु ग्रीवा वै धारयसीति प्रयोगस्तदौद्धत्यप्रकाशक एव।

भत्ता ह वा आद्यो भवति। (ऐ० आ० २।१।२)

यः स्वयमेव ऐश्वर्यादेरुपभोक्ता स एवान्यैरुपभोग्यो भवतीति भावः।

## (६) राजनीतिः

ज्ञानकाण्डात्मके खल्वस्मिन्नारण्यके राजनीतिविषयस्यानवसर एव। प्रजानां सम्बन्धे राष्ट्रस्य किं कर्तव्यं भवेदित्यत्र विषये प्रसङ्गागतं वाक्यमेकमधो निर्दिश्यते—

पुष्टिर्वै विशः (ऐ० आ० १।१।१)

पुष्टिकामा वै प्रजा भवन्ति। तथा च तासां पुष्टिरेव राष्ट्रस्य प्रथमं कर्तव्यमिति भावः।

## (७) यज्ञः

आरण्यकं हि प्राधान्येन ज्ञानकाण्डात्मकं भवति। तत्र यज्ञविषयः प्रायेण प्रासङ्गिक एव आगच्छति। अतोऽत्रापि यज्ञसम्बन्धे कतिचिदेव विचारा उपलभ्यन्ते। तद्यथा—

स एष वाचश्चित्तस्योत्तरोत्तरिक्रमो यद्यज्ञः। (ऐ० आ० २।३।३)

स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः।
(ऐ० आ० २।३।३)

स एष यज्ञानां संपन्नतमो यत्सोमः। एतस्मिन् ह्येताः पञ्च विधा अधिगम्यन्ते। यत्प्राक्सवनेभ्यः सैका विधा, त्रीणि सवनानि, यदूर्ध्वं सा पञ्चमी। (ऐ० आ० २।३।३)

पञ्च विधाः पञ्चप्रकारकमनुष्ठानम्। यत्सवनेभ्यः प्राक्। दीक्षणीयादिकमित्यर्थः। यदूर्ध्वं सवनेभ्यः। अवभृथमारभ्योदवसानीयान्तं कर्मजातमित्यर्थः।

## ( ८ ) ज्ञानकर्मणोरुभयोरपि पुरुषार्थहेतुत्वं कर्मणश्च महत्त्वम्

ज्ञानकाण्डस्य कर्मकाण्डस्य च परस्परं कः सम्बन्ध इत्यस्मिन्नर्थे वादिनां बह्वयो विप्रतिपत्तयो विद्यन्ते। तत्रैतस्मिन्नारण्यके तयोः परस्परं साध्यसाधनरूपः सम्बन्ध इत्येतदेव प्रतिपाद्यते। तत्त्वज्ञानं हि साध्यम्। अग्निहोत्रादिकर्माणि पुनश्चित्तसंस्काराय पापक्षयेण वा विविदिषोत्पादनेन वा साधनानि। तस्मात्कर्मानुष्ठानब्रह्मज्ञानयोरुभयोरपि सम्पादनं विधेयमित्ये-तदेवात्र निर्दिश्यते। तथा हि—

> एष पन्थाः-एतत्कर्मैतद् ब्रह्म। एतत्सत्यम्। तस्मान्न प्रमाद्येत्। तन्ना-तीयात्। न ह्यत्यायन् पूर्वे। येऽत्यायंस्ते पराबभूवुः। तदुक्तमृषिणा—प्रजा ह तिस्रो अत्यायमीयु·र्य१न्या अर्कमभितो विविश्रे······ ( ऋ० ८।१०१।१४ )। प्रजा ह तिस्रो अत्यायमीयुरिति। या वै ता इमाः प्रजास्तिस्रो अत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः। न्यन्या अर्कमभितो विविश्र इति। ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम्। ·······(ऐ० आ० २।१।१)

यदेतत्कर्म यच्चैतद् ब्रह्म तदेतदुभयं पन्थाः पुरुषार्थसाधनमित्यर्थः। तच्च सत्यम्। कर्मशब्देन तद्विषयज्ञानपूर्वकमनुष्ठानम्, ब्रह्मशब्देन तु तद्विषयं ज्ञानमात्रं विवक्षितमिति सायणः। अतीयादतिक्रामेत्। अत्यायन् अत्यक्रामन्। पूर्वे महर्षयो वसिष्ठादयः। ये नास्तिकाः। पराबभूवुः पराभूताः। पुरुषार्थाद् भ्रष्टा इत्यर्थः।

याः प्रजा वैदिकमार्गे श्रद्धारहिता अत्यायं यथोक्तस्य मार्गस्य अतिक्रममीयुः प्राप्ताः ता एव वयांसि वङ्गावगधाश्चेरपादा इत्येवमत्र निर्दिष्टाः।

अत्र सायणः—"ब्राह्मणक्षत्रियविट्शूद्राः प्रजाः। तासां भागचतुष्टये सति भागत्रय-वर्तिन्यः तिस्रः प्रजा वैदिकमार्गे श्रद्धारहिताः सत्यो यथोक्तस्य मार्गस्य अत्यायमतिक्रममीयुः प्राप्ताः············ 'तानि' तथाविधप्रजानां शरीराणि तद्दोषफलं भोक्तुं प्रवृत्तानि 'इमानि' अस्माभिर्दृश्यन्ते। सामान्यतः प्रोक्तानां पुनः 'वयांसि' इत्यादिना विशेषनिर्देशः। 'वयांसि' पक्षिणः काकगृध्रादय आकाशे दृश्यन्ते। सोऽयं पक्षिसंघस्त्रिविधानां प्रजानामेको भागः।

'वङ्गाः' वनगता वृक्षाः। 'अवगधाः' अवन्ति रक्षन्ति मनुष्यादीन्, गृध्यन्तेऽभिकाङ्क्ष्यन्त इति व्रीहियवाद्या ओषधयः 'अवगधाः'। गृधु अभिकाङ्क्षायामिति धातोर्गधशब्दो निष्पन्नः। सोऽयमोषधिवनस्पतिरूपः प्रजानां द्वितीयो राशिर्भूमौ वर्तते। 'ईरपादाः' उरःपादाः सर्पा भूबिलवासिनः। सोऽयं तृतीयो राशिः तदेतत् प्रजात्रयं वैदिकातिक्रमदोषजन्यं नरकमनुभवति।"

अयं भावः। वैदिकातिक्रमं कृतवत्यः प्रजास्त्रिविधा अपि पक्ष्यादिरूपेण नरकजन्मानुभवन्ति। चतुर्थभागवर्त्तिन्यः श्रद्धायुक्ताः सत्य उत्तमलोकप्राप्त्यर्थमग्निप्रभृतिदेवता उपासते।

आधुनिकास्तु वयांसि इत्यादिशब्दा मनुष्यजातिविशेषवाचिन इत्याहुः। तद्विषये विशेषपरिज्ञानार्थम् ए. बी. कीथ ( A. B. Keith ) महाशयस्यैतदारण्यकव्याख्यायां टिप्पणी ( पृ० २००, २०१ ) द्रष्टव्या।

तदिदं कर्म कृतमयं पुरुषो ब्रह्मणो लोकः। स इरामयः। ( ऐ० आ० २।१।३ )

मनुष्यस्य स्वरूपं चरित्रं वा स्वकृतैः कर्मभिराचरणैरेव निष्पद्यत इति भावः। स च ब्रह्मणो लोकः स्थानम्। इरामयोऽन्नमयः। तथा च तैत्तिरीया आमनन्ति "स वा एष पुरुषोऽन्नरसमयः" इति।

> अथातो रेतसः सृष्टिः। प्रजापते रेतो देवाः, देवानां रेतो वर्षम्, वर्षस्य रेत ओषधयः, ओषधीनां रेतोऽन्नम्, अन्नस्य रेतो रेतः, रेतसो रेतः प्रजाः, प्रजानां रेतो हृदयम्, हृदयस्य रेतो मनः, मनसो रेतो वाक्, वाचो रेतः कर्म। तदिदं कर्म कृतमयं पुरुषो ब्रह्मणो लोकः। स इरामयः। ( ऐ० आ० २।१।३ )

रेतः सारभूतं कार्यम्। तदिदं कर्म कृतमयं पुरुषः। मनुष्यस्य स्वरूपं चरित्रं वा तत्कृतकर्मभिरेव निष्पद्यत इति भावः। स चायं पुरुषो ब्रह्मणो लोकः स्थानम्। इराशब्दोऽन्नवाची।

## ( ६ ) देवतानां सामान्येन, तत्तद्देवतायाः, स्वर्गादिलोकानां च वर्णनम्

प्राधान्येन यज्ञस्वरूपप्रतिपादनपरे ब्राह्मणानां मुख्यभागे देवतानां सामान्येन, तत्तद्देवतायाः, स्वर्गादिलोकानां वा यथा विस्तरेण वर्णनं दृश्यते, न तथा तेषामारण्यकेषु, तेषां

प्राधान्येन ज्ञानकाण्डात्मकत्वात् । तथापि अत्रारण्यके यत्किंचिदप्युपलभ्यमानं तद्वर्णनमत्र संगृह्यते । तद्यथा—

## ( क ) देवतानां सामान्येन वर्णनम्

वागग्निश्चक्षुरसावादित्यश्चन्द्रमा मनो दिशः श्रोत्रम् । स एष प्रहितां संयोगोऽध्यात्मम् । इमा देवता अद उ आविरधिदैवतम् । ( ऐ० आ० २ । १ । ५ )

प्रहिताम् । प्रकर्षेण हितानामग्न्यादीनाम् । अध्यात्मं पुरुषशरीरे । अद उ आविः । प्रत्यक्षमनुभूयमानोऽग्न्यादिदेवतारूपेण प्रकटीभावः । अग्न्यादिदेवतानां देवलोके विकासेन शरीरे च संकोचेनावस्थितिरिति तात्पर्यम् ।

## ( ख ) तत्तद्देवताया वर्णनम्

### ( १ ) चन्द्रमाः

चन्द्रमा अस्मै पूर्वपक्षापरपक्षान् विचिनोति पुण्याय कर्मणे । ( ऐ० आ० २ । १ । ७ )

अस्मै पुरुषाय । विचिनोति विशेषेण संपादयति । पुण्याय कर्मणे । दर्शपूर्णमासादिपुण्यकर्मार्थम् ।

### ( २ ) आदित्यः

पुरस्ताद्ध्येष इमाँल्लोकान् प्रत्यङ्ङभिरोहति । ( ऐ० आ० १ । २ । ४ )

एष आदित्यः । उदयादूर्ध्वमामध्याह्नं पश्चिमाभिमुखस्यादित्यस्यारोहणं हि दृश्यत इति भावः ।

### ( ३ ) द्यावापृथिव्यौ

तद्धुतापि यत्रैतद् बलवदनुद्गृह्णन् संदधदहोरात्रे वर्षति द्यावापृथिव्यौ समधातामित्युताप्याहुः । ( ऐ० आ० ३ । १ । २ )

'तत्' तस्मिन्नुक्तार्थे 'उतापि' लोकप्रसिद्धिरपि विद्यत इत्यर्थः। उतापीति निपात-संमुदायः समुच्चयवाची लोकप्रसिद्धिं समुच्चिनोति । एतत्पर्जन्यरूपम् । अनुद्गृह्णन् वृष्ट्युपसंहार-मकुर्वन् । संदधदेकीकुर्वन् । समधाताम् । सन्धानं परस्परैक्यं प्राप्तवत्यौ ।

द्यौर्हास्मै वृष्टिमन्नाद्यं संप्रयच्छति । ( ऐ० आ० २ । १ । ७ )

अस्मै पुरुषाय ।

इतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च । ( ऐ० आ० २ । १ । २ )

इतः पृथिव्याः ।

अन्नमन्नादमियमेव पृथिवी । इतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च । यद्ध किञ्चेदं प्रेता३इ तदसौ सर्वमत्ति, यद्धु किञ्चातः प्रैती३ तदियं सर्वमत्ति । सेय-मित्त्याद्याऽत्त्री । अत्ता ह वा आद्यो भवति । न तस्येशे यन्नाद्याद् यद्वैनं नाद्युः ।
( ऐ० आ० २ । १ । २ )

यल्लोकेऽन्नमन्नादं भोक्तृजातं तदुभयमपि पृथिव्याः समुत्पन्नत्वात्तदात्मकमेव ।

प्रेता३इ । प्रेतं प्रैति म्रियत इति यावत् । ईर गतावित्यस्य धातोः प्रपूर्वस्य मरणार्थत्वं द्रष्टव्यम् । असौ स्वर्गलोकः । अतः स्वर्गात् लोकात् । प्रैती३ । प्रैति भूमावागच्छति । भूमौ यागं कुर्वन्तो यजमाना मरणादूर्ध्वं स्वर्गं भुक्त्वा पुनर्भूमावागच्छन्तीति वाक्यद्वयस्य ( 'यद्ध' इत्यारभ्य 'अत्ति' इत्यन्तयोर्वाक्ययोरित्यर्थः ) अर्थः । तत्प्रसिद्ध्यर्थं स्तुतिद्वयं द्रष्टव्यम् । ( सायणः ) । अथवा वाक्यद्वयमपि उभयोर्द्यावापृथिव्योः सामान्येनादानप्रदानमेव व्याचष्टे ।

अनेन प्रकारेण हीयं पृथिवी आद्या च अत्त्री च । यः स्वयमेवात्ता ऐश्वर्यादेरुपभोक्ता स एवान्यैराद्य उपभोग्यो भवतीति भावः । यः कोऽपि मनुष्यो यद्वस्तु स्वयं नाद्यात् न भुञ्जीत स तस्य वस्तुनो नेशे नेष्टे । न स्वामी भवति । यद्वा एनं मनुष्यमन्ये नाद्युर्न भुञ्जीरन् तदापि स तस्य वस्तुनो नेष्टे ।

अस्यामोषधयो जायन्ते । अग्निरेनाः स्वदयति । ( ऐ० आ० २।१।७ )

अस्यां पृथिव्याम् । स्वदयति स्वादूकरोति । पाचयतीति वा ।

### ( ४ ) प्रजापतिः

अनिरुक्तो वै प्रजापतिः । ( ऐ० आ० १।२।२ )

### ( ५ ) वरुणः

वरुणोऽस्य प्रजां धर्मेण दाधार । ( ऐ० आ० २।१।७ )

अस्योपासकस्य । प्रजां पुत्रादिरूपाम् । दाधार धारयति ।

### ( ६ ) स्वर्गादिलोकाः

एतावता ( = अरत्निमात्रेण ) वै स्वर्गा लोकाः संमिताः । ( ऐ० आ० १।२।४ )

अन्तरिक्षादुपरिवर्त्तमानभोगहेतवो ये स्वर्गलोकास्ते प्रजापतेररत्निमात्रेण सदृशा भवन्ति ( सायणः ) । अरत्निः प्रादेशद्वयप्रमाणम् ।

त्रयो वा इमे त्रिवृतो लोकाः । ( ऐ० आ० १।२ )

लोकाश्च पृथिव्यन्तरिक्षं द्यौरिति एवं त्रिसंख्याका उत्तममध्यमाधमैः सात्त्विकराजसतामसैः प्राणिभिरुपेतत्वात् त्रिवृतः ( सायणः ) ।

द्वौ वा इमौ लोकावद्धातमाविव दृश्येते, य उ एने अन्तरेणाकाशः सोऽन्तरिक्षलोकः । ( ऐ० आ० १।२।३ )

अद्धातमौ । अतिशयेन प्रत्यक्षौ ।

अन्तरिक्षं वा अनु पतन्ति । अन्तरिक्षमनु धावयन्ति । ( ऐ० आ० २।१।२ )

पतन्ति । पक्षिणः संचरन्ति । अन्तरिक्षमनु धावयन्ति । अन्तरिक्षमवकाशमनुसृत्यैव मनुष्या अश्वादीन् धावयन्ति ।

## ( १० ) अग्न्यादिपदार्थविज्ञानम्

ऐतरेयब्राह्मणस्य मुख्यभाग इवास्मिन्नारण्यकेऽपि तत्तत्प्रसङ्गेन नैकविधपदार्थानां गुणवर्णना तद्विषयकविज्ञानस्य चर्चा च विद्यते। अग्न्यादिदेवतानामुपरिष्टाद् निर्दिष्टानामिह यद्वर्णनं तदाधिभौतिकदृष्ट्यैवेति मन्तव्यम्। अत्र हि—आपो वै धेनवस्ता हि सर्वं प्रीणयन्ति, प्राच्यां दिशि वै ( सूर्योदयकाले ? ) देवरेतः प्रजायते, अहरेव प्राणो रात्रिरपानः, प्राणस्य भूतिकारणत्वरूपेण तद्विरुद्धत्वरूपेण चोपासनेन यथाक्रमं समृद्धेः पराभवस्य चावाप्तिः; प्राणेन पर्वणां संधानम्, अन्नं वै मधु—इत्यादिरूपेण उपयोगि वर्णनं विद्यते। तथा हि—

### वायुः

स एष वायुः पञ्चविधः। प्राणोऽपानो व्यान उदानः समानः। ( ऐ० आ० २।३।३ )

स एषः। पुरुषशरीरगतः प्राणवायुरित्यर्थः।

सैषोऽन्नस्य ग्रहो यद्वायुः। अन्नायुर्वा एष यद्वायुः। ( ऐ० आ० २। ४। ३ )

ग्रहो ग्राहकः। अन्नायुः। अन्नद्वारेणायुष्यहेतुः। अन्नरसेन हि प्राणो देहे बध्यत इत्यर्थः।

### अग्निः

अग्निर्वा अन्नादः। ( ऐ० आ० १। १। २ )

### आपः

आपो वा......अग्नेर्धूमाज्जायन्ते। ( ऐ० आ० १। ३। ५ )

आपो वाव धेनवस्ता हीदं सर्वं धिन्वन्ति। ( ऐ० आ० १। ३। ५ )

धिन्वन्ति प्रीणयन्ति ( सायणः )।

अमुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किञ्च। ( ऐ० आ० २। १। २ )

अमुतो द्युलोकात् । ततो दत्तेन वृष्टिजलेन हि ओषधिवनस्पत्यादिकमुत्तिष्ठतीति भावः ।

आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे । ( ऐ० आ० २ । १ । ७ )

तडागपुण्यनद्यादिषु वर्तमाना आपः स्नानाचमनमार्जनद्वारेण अस्य उपासकस्य श्रौतस्मार्तकर्मानुष्ठानाय श्रद्धामास्तिक्यबुद्धिमुत्पादयन्ति ( सायणः ) । यद्वा नद्यादिदर्शनेन परमेश्वरस्य महिमानमनुभूय मनुष्य आस्तिक्यबुद्धिं लभत इत्येव सामान्येनार्थः ।

## प्राची दिक्

प्राग्वै देवरेतः संप्रजायते । ( ऐ० आ० १ । २ । ४ )

प्राक् प्राच्यां दिशि । देवरेतः । देवानां रेतः । अत्र "देवलोकस्य पूर्वदिग्वर्त्तित्वात्" इति सायणः ।

## प्राणमहिमा

तदप्येतदृषिणोक्तम् । त्वमस्माकं तव स्मसीति । ( ऐ० आ० २ । १ । ४ )

प्राणमहिम्नो वर्णनमधिकृत्यैतदुच्यते ।

तं देवा अब्रुवंस्त्वमुक्थमसि, त्वमिदं सर्वमसि, तव वयं स्मस्त्वमस्माकमसीति । ( ऐ० आ० २।१।४ )

तं प्राणम् । देवाः । चक्षुःश्रोत्रमनोवाक्प्राणरूपा अत्र प्रकृताः । उक्थं शस्त्रम् । शस्त्रेण शंसनीयमित्यर्थः ।

अहरेव प्राणो रात्रिरपानः । ( ऐ० आ० २।१।५ )

एष वै गोपाः, एष हीदं सर्वं गोपायति । ........न ह्येष कदाचन संविशति । ..... एष ह्यन्तर्भुवनेष्वावरीवर्त्ति । ......सर्वं हीदं प्राणेनावृतम् । ( ऐ० आ० २।१।६ )

एष प्राणः । संविशति । स्वव्यापारादुपरतो भवति ।

सर्वाणि भूतान्या पिपीलिकाभ्यः प्राणेन ......विष्टब्धानि । ( ऐ० आ० २।१।६ )

तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुः । ........अभूतिरित्यसुरास्ते पराबभूवुः । ( ऐ० आ० २।१।८ )

तं प्राणदेवम् । भूतिरिति । समृद्धेरैश्वर्यस्य वा रूपेणेत्यर्थः। अभूतिरिति । निराशावादिनो भूत्वेति यावत् ।

स एष मृत्युश्चैवामृतं च । ( ऐ० आ० २।१।८ )

स एष प्राणः । स्वनिर्गमनेन देहमरणात् प्राणस्य मृत्युत्वम् । स्वावस्थानेन देहमरणाभावादमृतत्वम् ।

मर्त्यानि हीमानि शरीराणी॑३ अमृतैषा देवता । ........निचिन्वन्ति हैवेमानि शरीराणी॑३ अमृतैवैषा देवता । ( ऐ० आ० २।१।८ )

एषा प्राणदेवता । निचिन्वन्ति । अन्नादिना वृद्धिमुपगच्छन्ति ।

एष इमं लोकमभ्यार्चत्पुरुषरूपेण य एष तपति प्राणो वाव तदभ्यार्चत् प्राणो ह्येष य एष तपति । तं शतं वर्षाण्यभ्यार्चत्तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति । ( ऐ० आ० २।२।१ )

अभ्यार्चत् । स्वप्रवेशेनाभितोऽर्चनीयमकरोत् ( सायणः ) । प्राविशदित्यर्थो वा । इमं लोकम् । अवलोक्यमानमिमं देहम् । प्राणो ह्येष य एष तपति । अत्र सायणः—"य एष मण्डलस्थोऽस्माभिर्दृश्यमानस्तपति स एष प्राणो हि । न खल्वादित्यप्राणयोर्भेदोऽस्ति । अध्यात्ममधिदैवं चेत्येवं स्थानभेदमात्रम् । अत एव—"आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः" ( प्रश्नोपनिषदि ३।८ ) इति श्रुत्यन्तरे पठति । एक एव पदार्थो देहं प्रवर्त्तयितुमन्तःस्थितो दृष्टिमनुग्रहीतुं बहिःस्थित इत्येतावदेव द्वयोर्वैषम्यम् ।"

स इदं सर्वं मध्यतो दधे यदिदं किञ्च ।....तस्येदं विश्वं मित्रमासीत्....तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति ।....स इदं सर्वं पाप्मनोऽत्रायत....एष ह एव विभ्रद्वाजः । प्रजा वै वाजस्ता एष बिभर्ति ।....तं देवा अब्रुवन्नयं वै नः सर्वेषां

वसिष्ठ इति ।""स इदं सर्वमभिप्रागाद् यदिदं किञ्च ।""स इदं सर्वमभ्यपवयत यदिदं किञ्च ।""सोऽब्रवीदहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति ।

( ऐ० आ० २।२।१-२ )

स प्राणदेवः । तं प्राणदेवम् । वामः संभजनीयः । वाजः । वजिधातुर्गत्यर्थः । गतिमत्त्वात्प्रजानां देहो वाजशब्देनोच्यत इति सायणः । वसिष्ठोऽत्यन्तं निवासहेतुः, अतिशयेन वसुयुक्तो वा । अभिप्रागात् सर्वतः प्रगतवान् । अभ्यपवयत । अभितः पूतं शुद्धमकरोत् ।

तमिन्द्र उवाच । प्राणो वा अहमस्मि ऋषे, प्राणस्त्वम् , प्राणः सर्वाणि भूतानि, प्राणो ह्येष य एष तपति, स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि । तस्य मेऽन्नं मित्रं दक्षिणम् । ( ऐ० आ० २।२।३ )

तं विश्वामित्रम् । उपाख्यानविशेषोऽत्र प्रकृतः । दक्षिणम् । अभिवृद्धिहेतुः । दक्ष वृद्धाविति धातुः ।

तद् योऽहं सोऽसौ योऽसौ सोऽहम् । तदुक्तमृषिणा—"सूर्य आत्मा जगतस्तस्थुषश्च" इति ( ऐ० आ० २।२।४ )

तत् तस्मिन्सर्वात्मके प्राणदेवतास्वरूपे 'योऽहम्' उपासकशरीरवर्ती, 'सोऽसौ' स एवादित्यमण्डलस्थः पुरुषः । तथा 'योऽसौ' अधिदैवतमादित्यमण्डलस्थो ध्येयः पुरुषः, 'सोऽहम्' स एव उपासकशरीरस्थोऽहमस्मि । एवमन्योन्यतादात्म्यं ध्यायेत् , अध्यात्ममधिदैवं च ।

प्राणेन पर्वाणि संदधाति । ( ऐ० आ० १।४।१ )

प्राणेनेमं लोकं सन्तनोति ।""प्राणेनान्तरिक्षलोकं सन्तनोति ।""प्राणेनामुं लोकं सन्तनोति । ( ऐ० आ० १।४।३ )

प्राणो वंश इति विद्यात् । ( ऐ० आ० ३।१।४ )

लोके यथा वंशो गृहस्य धारकस्तथैव प्राणोऽयं देहगृहस्य धारक इति भावः ।

प्राणो वंश इति स्थविरः शाकल्यः । तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन् प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितः । ( ऐ० आ० ३।२।१ )

शालावंशे। शालाया आधारभूते स्तम्भाग्रेषु दण्डायमानत्वेन स्थापिते प्रौढे वंशे। (सायणः)

एष ह वै संप्रतिप्राणो यन्मज्जा, एतद्रेतः। न ह वा ऋते प्राणाद्रेतः सिच्यते। यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेन्न संभवेत्। (ऐ० आ० ३ २।२)

संप्रतिप्राणः। समीचीनो मुख्यः प्राणवायुः। पूयेत् नश्येत्।

सप्त वै शीर्षन् प्राणाः। (ऐ० आ० १।५।२)

नव प्राणाः, आत्मैव दशमः। (ऐ० आ० १।३।७)

नव वै प्राणाः। (ऐ० आ० १।३।८)

द्वादशविधा वा इमे प्राणाः, सप्त शीर्षण्या द्वौ स्तन्यौ त्रयोऽवाञ्चः। अत्र वै प्राणा आप्यन्ते। (ऐ० आ० १। ५। १)

शरीरगताः प्राणाश्छिद्रभेदेन द्वादशविधाः सन्ति। तथा च सप्त शिरसि छिद्राणि, स्तनयोर्द्वे छिद्रे, नाभ्यां पायुगुदयोश्च त्रीणि। अत्र एतेषु द्वादशसु छिद्रेष्वेव प्राणाः प्राप्यन्ते।

ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति। प्राणस्य ह्यन्वपायमेता अपियन्ति। (ऐ० आ० २। ३। ३)

एता देवताः। चक्षुरादयः। अपायमनु। देहादपगमनमनु। अपियन्ति लीयन्ते।

एतावता (= प्रादेशमात्रेण) वै प्राणाः संमिताः। (ऐ० आ० १। २। ४)

प्राणवायवो हि देहस्यान्तर्हृदयादूर्ध्वं प्रादेशमात्रं संचरन्ति। मुखाद्बहिरपि संचरन्तः प्रादेशमात्रेण संमिता भवन्ति। (सायणः)

## ऋतवः

षड् वा ऋतवः। (ऐ० आ० १। ३। ८)

## अन्नम्

अन्नं वै मधु (ऐ० आ० १। १। ३)

मादक (माक्षिक इति पाठान्तरम्) वाची मधुशब्दस्तन्निष्ठं प्रियत्वं लक्षयति। अन्नस्य प्रियत्वं प्रसिद्धम्। (सायणः)

अन्नेन हीदं सर्वमश्नुते । ( ऐ० आ० २ । १ । २ )

इदं सर्वम् । प्राणिजातम् । अश्नुते प्राप्नोति । अन्नवन्तं जनं सर्वे तल्लाभाय सेवन्त इति भावः ।

अन्नेन हीमानि सर्वाणि भूतानि समनन्ती३ । अन्नेनेमं लोकं जयति । अन्नेनासुम् । ( ऐ० आ० २ । १ । २ )

समनन्ति सम्यक् चेष्टन्ते । सानुनासिकप्लुतिरुक्तार्थप्रसिद्धयर्था ( सायणः ) । लोकेऽन्नप्रदानेन मनुष्यादीनां वश्यत्वं प्रसिद्धम् । शास्त्रीयेणान्नदानेन तु देवतातुष्टेः स्वर्गलोकजयः ।

त्रेधा विहितं वा इदमन्नमशनं पानं खादः । ( ऐ० आ० २ । ३ । ४ )

अशनमोदनरूपम् । पानं जलक्षीरादिरूपम् । खादो लड्डुकादिः । ( सायणः )

एतावता (=मुष्टिपरिमितेन द्रव्येण ) वै सर्वमन्नाद्यं क्रियते । एतावता सर्वमन्नाद्यमभिपन्नम् । ( ऐ० आ० १ । २ । ४ )

मुष्टिपरिमितेन द्रव्येण मोदकमण्डकपूरिकादिरूपं सर्वमन्नाद्यं निष्पाद्यते । मुष्टिपरिमितेन च ग्रासेन सर्वमन्नाद्यं मुखे प्राप्तं भवति । ( सायणः )

## ओषधिवनस्पतयः

समुत्सृप्य वा ओषधिवनस्पतयः फलं गृह्णन्ति । ( ऐ० आ० १ । २ । ४ )

समुत्सृप्य । सम्यगुन्नता भूत्वा ।

## उदुम्बरः

ऊर्वा अन्नाद्यमुदुम्बरः । ( ऐ० आ० १ । २ । ३ )

ऊर्क्शब्दो रसवाची ।

दर्भो वा ओषधीनामपहतपाप्मा । ( ऐ० आ० १ । २ । ३ )

दर्भस्य शुद्धिहेतुत्वात्पापराहित्यम् । पवित्रं वै दर्भा इति श्रुत्यन्तरात् । ( सायणः )

## ( ११ ) मनुष्यस्य पश्वादेश्च स्वभावादिवर्णनम्

ऐतरेयब्राह्मणस्य मुख्यभाग इवात्राप्यारण्यके मनुष्यादीनां प्राणिनां स्वभावादिवर्णनं यत्र तत्र प्रसङ्गव्याजेनोपलभ्यते स एष पुरुषः पञ्चविधः, पुरुषशरीरस्य द्यावापृथिवीभ्यां सादृश्यम्, पञ्चविंशोऽयं पुरुषः, मनुष्यशरीरस्य देवरथत्वकल्पना, पुरुषो जायां वित्त्वा कृत्स्नतरमिवात्मानं मन्यते, नवकपालं वै शिरः, इत्यादयो गभीरा रमणीयाश्च विचारा अत्र विषय उपलभ्यन्ते । तथा हि—

### ( क ) पुरुषः

स एष पुरुषः पञ्चविधः । तस्य यदुष्णं तज्ज्योतिः, यानि खानि स आकाशः,अथ यल्लोहितं श्लेष्मा रेतस्ता आपः, यच्छरीरं सा पृथिवी,यः प्राणः स वायुः । ( ऐ० आ० २ । ३ । ३ )

पुरुषो ह् वा अयं सर्वं आन्दम्, द्वे विदले भवत इत्याहुः । तस्येदमेव पृथिव्या रूपमिदं दिवः, तत्रायमन्तरेणाकाशो यथासौ द्यावापृथिव्यावन्तरेणाकाशः । तस्मिन् हास्मिन्नाकाशे प्राण आयत्तो यथामुष्मिन्नाकाशे वायुरायत्तः । यथामूनि त्रीणि ज्योतींषि, एवमिमानि पुरुषे त्रीणि ज्योतिंषी । यथासौ दिव्यादित्यः, एवमिदं शिरसि चक्षुः । यथासावन्तरिक्षे विद्युत्, एवमिदमात्मनि हृदयम् । यथायमग्निः पृथिव्याम् एवमिदमुपस्थे रेतः । ( ऐ० आ० ३ । १ । २ )

आन्दम् अंण्डसदृशम् । वर्णविकारश्छान्दसः ( सायणः ) । द्वे विदले । द्वौ परस्परमधउपरितनभागौ । यथा ब्रह्माण्डस्याधःकपालमूर्ध्वकपालं चेति द्वौ परस्परमधउपरितनभागौ, तथा पुरुषेऽपि पादावारभ्याधरोष्ठपर्यन्तमेकं विदलम्, उत्तरोष्ठमारभ्य मूर्धपर्यन्तमपरं विदलम् । अयमन्तरेणाकाशः । तयोरधरोत्तरदलयोर्मध्येऽस्मगाभिर्मुखे दृश्यमानं छिद्रम् । आयत्त आश्रितः ।

पञ्चविंशोऽयं पुरुषः । दश हस्त्या अङ्गुलयो दश पाद्यां द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशः । ( ऐ० आ० १ । १ । २ )

आत्मा मध्यदेहः ( सायणः ) ।

एकविंशोऽयं पुरुषः । दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशः ।

( ऐ० आ० १ । १ । ४ )

आत्मा मध्यदेहः ( सायणः )।

पञ्चविंश आत्मा पञ्चविंशः प्रजापतिः। दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशः। ( ऐ० आ० १ । १ । ४ )

आत्मा पुरुषः। मध्यदेहो वा।

पञ्चाङ्गुलयश्चतुष्पर्वा द्वे कक्षंसी दोश्चाक्षश्चांसफलकं च सा पञ्चविंशतिः। पञ्चविंशानीतराणि ह्यङ्गानि तच्छतम्। आत्मैकशततमः। ( ऐ० आ० १ । २ । २ )

एकस्मिन् हस्ते पञ्चाङ्गुलयः। एकस्यामङ्गुलौ चत्वारि पर्वाणि। पर्वशब्दो भागवाची। अग्रभागो मध्यभागो मूलभागस्तन्मूलभागश्चेति चत्वारो भागाः। यद्यप्यङ्गुष्ठे भागत्रयमेवोपलभ्यते, तथापीतरसाम्याय भागचतुष्टयं कृत्वा गणनीयम्। कक्षःशब्देन कक्षस्य पार्श्वद्वयं विवक्षितम्। अक्षश्चक्षुरिन्द्रियमेकम्। ( सायणः )। एवं दक्षिणभागे पञ्चविंशतिः। एवं वामबाहुगतान्यङ्गान्यपि पञ्चविंशतिः। अनेनैव न्यायेनोभयोः पादयोरपि प्रत्येकं पञ्चविंशतिरङ्गानि। तथा हि प्रत्येकपादे पूर्ववदङ्गुलिपर्वसंख्या विंशतिः। ऊरू जङ्घे द्वे, सन्धयस्त्रयः। इत्येवं पञ्चविंशतिः। अत्राक्षशब्दार्थविषये पाश्चात्यविदुषां मतान्तराणि 'कीथ'स्यैतदारण्यकानुवादे टिप्पण्यां ( पृ० १७५ ) द्रष्टव्यानि।

यच्छतं तदायुः। ( ऐ० आ० १ । २ । २ )

आयुषः शतसंवत्सरपरिमितत्वमिति भावः।

शतं वर्षाणि पुरुषायुषो भवन्ति। ( ऐ० आ० २ । २ । १ )

अनकाममारोऽथ देवरथः। तस्य वागुद्धिः, श्रोत्रे पक्षसी, चक्षुषी युक्ते, मनः संग्रहीता। तदयं प्राणोऽधितिष्ठति। ( ऐ० आ० २ । ३ । ८ )

मनुष्यशरीरस्येदं रथरूपेण वर्णनम्। अनकाममारः। कामान् मारयतीति काममारः। न काममारोऽकाममारः। कामसंपादक इत्यर्थः। तद्विपरीतोऽनकाममारः। सर्वथा कामान्नाशयत्येवेत्यर्थः। उद्धिः। ऊर्ध्वं धीयते युगमत्रेति रथस्य मुखमीषयोरग्रमुद्धिरित्युच्यते। पक्षसी। पार्श्वद्वयवर्त्तिनी चक्रे। युक्ते युगपार्श्वद्वये बद्धयोरश्वयोः स्वरूपे। संग्रहीता सारथिः। अधितिष्ठति उपर्यारोहति।

पुरुषो जायां वित्त्वा कृत्स्नतरमिवात्मानं मन्यते। ( ऐ० आ० १ । ३ । ५ )

अथातः प्रजापतिसंहिता। जाया पूर्वरूपं पतिरुत्तररूपं पुत्रः संधिः प्रजननं संधानम्। सैषादितिः संहिता। ( ऐ० आ० ३ । १ । ६ )

प्रजापतिसंहिता। प्रजापतिप्रणीता संहिता ( सायणः ) । प्रजननं पुत्रोत्पादनम्। संधानं। संहिताया निमित्तम्। अदितिरखण्डनीया।

पुरुषे ह वा अयमादितो गर्भो भवति। यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतमात्मन्येवात्मानं बिभर्ति । तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति। तदस्य प्रथमं जन्म। तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा। तस्मादेनां न हिनस्ति। सास्यैतमात्मानमत्र गतं भावयति। सा भावयित्री भावयितव्या भवति। तं स्त्री गर्भं बिभर्ति। सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति। स यत् कुमारं जन्मनो-ऽग्रेऽधिभावयत्यात्मानमेव तद्भावयति। एषां लोकानां सन्तत्या एवं संतता हीमे लोकाः। तदस्य द्वितीयं जन्म। सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते। अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति। स इतः प्रयन्नेव पुनर्जायते। तदस्य तृतीयं जन्म। ( ऐ० आ० २ । ५ । १ )

अयं पुरुषः 'एनत्' जीवान्तराविष्टं रेतोरूपं शरीरं 'जनयति'। तदस्य प्रथमं जन्म। 'तद्' रेतोनिःसरणरूपम्। आत्मभूयं स्वशरीरभावम्। अत्र स्वशरीरे। अस्य रेतःसेक्तुः। एतमात्मानं पुत्ररूपम्। भावयति परिपालयति। भावयितव्या। अभीष्टान्नपानवस्त्रादिप्रदानेन पुरुषेण पालयितव्या। स पुरुषः 'अग्र एव' प्रसवात्प्रागेव निष्पन्नं 'कुमारम्' 'जन्मनोऽग्रे' प्रसवादूर्ध्वम् 'अधिभावयति' अधिकत्वेन शास्त्रीयजातकर्मादिना संस्करोति। प्रतिधीयते। स्वस्य प्रतिनिधित्वेन स्थाप्यते।

मिथुनं वै स्वादु प्रजा स्वादु।········मिथुनं वै मधु प्रजा मधु। ( ऐ० आ० १।३।४)

अतिरिक्तं वै पुंसो न्यूनं स्त्रियै। ( ऐ० आ० १।४।२ )

यदतिरिक्तमुत्कृष्टं तत्पुरुषस्थानीयम्। यन्न्यूनमनतिरिक्तं तत्स्त्रीस्थानीयमिति भावः।

तद्यदेतत् स्त्रियां लोहितं भवत्यग्नेस्तद्रूपम्। ········अथ यदेतत्पुरुषे रेतो भवत्यादित्यस्य तद्रूपम्। ( ऐ० आ० २।३।७ )

तस्माद् द्वयो रेतः सिक्तं सदेकतामेवाप्येति योषामेवाभि। अत आजाना हि योषा, अतः प्रजाना। ( ऐ० आ० १।४।२ )

द्वयोः स्त्रीपुरुषयोः। तयो रेतो गर्भाशये निषिक्तं सदेकतामापन्नं स्त्रियमेवाभिलक्ष्यावतिष्ठते न पुरुषशरीर इति भावः। आजाना। अस्माद् मिलिताद्रेतोद्वयात्साकल्येन शरीरोत्पत्तिर्यस्यां सा आजाना। प्रजाना। प्रकृष्टो जानः पुत्रपौत्रोत्पादनं यस्यां सा प्रजाना। (सायणः)

यत्र ह क्व च पुत्रस्य तत्पितुः, यत्र वा पितुस्तद्वा पुत्रस्य। ( ऐ० आ० २।१।८ )

यथोपपादमिव वा अन्तस्त्यं ह्रसीय इव च द्राघीय इव च। ( ऐ० आ० १।५।१ )

उदरमध्येऽवस्थितमान्त्रक्लोमप्लीहादिकं यथोपपन्नं भवति तथैवावतिष्ठते। किञ्चिदङ्गमतिह्रस्वमिव, अन्यदङ्गमतिदीर्घमिव स्थितमित्यर्थः ( सायणः )।

विक्षुद्रमिव वा अन्तस्त्यमणीय इव च स्थवीय इव च। ( ऐ० आ० १।५।१ )

अन्तस्त्यमुदरमध्यवर्त्ति क्लोमप्लीहादिकम्। विक्षुद्रमिव। विविधत्वेनाल्पमेव।

एकविंशतिर्हि ता अन्तरुदरे विकृतयः। ( ऐ० आ० १।५।१ )

ता विकृतयः। क्लोमप्लीहाद्यवयवरूपाः। अन्तरुदरे। उदरमध्ये। ( सायणः )

पञ्च हि दशतो भवन्ति। ( ऐ० आ० १।३।८ )

चक्षुः श्रोत्रं मनो वाक् प्राण इत्येतत्पञ्चकं हि मातृपितृसंबन्धिनो भूतदशकान्निष्पद्यत इति भावः ( सायणः )।

चक्षुः श्रोत्रं मनो वाक्प्राणस्ता एताः पञ्च देवता इमं विष्टाः पुरुषम्, पञ्चो हैवेता देवता अयं विष्टः पुरुषः। सोऽत्रा लोमभ्य आ नखेभ्यः सर्वः साङ्ग आप्यते। तस्मात्सर्वाणि भूतान्या पिपीलिकाभ्य आसान्येव जायन्ते। ( ऐ० आ० १।३।८ )

साङ्गः संपूर्णावयवः। आप्यते। प्राप्तो दृश्यते। भूतानि प्राणिनः। आसान्येव। चक्षुरादीन्द्रियैस्तत्तद्गोलकैश्च संपूर्णा एव।

अग्रमङ्गानां शिरः। ( ऐ० आ० १।४।१ )

नवकपालं वै शिरः। ( ऐ० आ० १।४।१ )

ता एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः। श्रयन्तेऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद। ( ऐ० आ० २।१।४ )

चक्षुरादयः श्रियः श्रीरूपा एव, सर्वस्य जीवनव्यापारस्य तदाश्रितत्वात्।

त्रिवृदिव वै चक्षुः, शुक्लं कृष्णं कनीनिकेति। ( ऐ० आ० २।१।५ )

त्रिवृदिव त्रिगुणमिव।

तदेतद् ब्रध्नस्य विष्टपं यदेतन्नासिकायै विनतमिव। ( ऐ० आ० २।१।२ )

ब्रध्नस्य विष्टपम्। आदित्यस्य स्थानम्। यदेतन्नासिकायै विनतमिव। नासिकायाः किञ्चिन्नतं यन्मूलम्।

ऊर्वष्ठीवे प्रतिष्ठे। ( ऐ० आ० १।५।१ )

ऊर्वष्ठीवे विस्तीर्ण ऊरुमूले। प्रतिष्ठे प्रतिष्ठाहेतू। (सायणः)। 'उर्वग्रीवे' इति पाठान्तरे तु 'ऊरू' इति प्रकृतपदेन तस्य संबन्ध इति ज्ञेयम्।

## ( ख ) पशवः

तस्मात् पशवो वीर्यमनूपतिष्ठन्त ईर्यतां चैवाभ्युत्थानं च। ( ऐ० आ० १।५।१ )

तस्मात् लोके पशवो वाक्पारुष्येण दण्डपारुष्येण वा गोपालवीर्यमवधार्य प्रत्याव्रजन्ति। तथा तद्वीर्यवशादेव च ईर्यतां प्रेरणीयताम्, शयनाद् अभ्युत्थानं च प्राप्नुवन्तीति शेषः। ( सायणः )

दक्षिणा वा एकेषां पशूनां रज्जवः सव्या एकेषाम्। ( ऐ० आ० १।२।३ )

दक्षिणहस्तेन निर्मिता रज्जवो दक्षिणावृतः। वामहस्तेन निर्मिताः सव्यावृतः। लोके केचित्पशवो दक्षिणावृद्भिर्बध्यन्ते, केचित्सव्यावृद्भिः। ( सायणः )

तिर्यञ्चं वा अश्वमधिरोहन्ति। ( ऐ० आ० १।२।४ )

## ( ग ) वयांसि ।

प्रतिष्ठा पुच्छं वयसाम् । ....सर्वाणि वयांसि पुच्छेन प्रतितिष्ठन्ति, पुच्छेनैव प्रतिष्ठायोत्पतन्ति । प्रतिष्ठा हि पुच्छम् । ( ऐ० आ० १ । ४ । २ )

शुको हैवं वृक्षमधिरोहति । स उ वयसामन्नादतमः । ( ऐ० आ० १।२।४ )

एवम् । लुबुकस्पर्शनपुरःसरम् ।

एवं श्येनो वयांस्यभिनिविशते, एवं वृक्षम् । स उ वयसां वीर्यवत्तमः ।
( ऐ० आ० १।२।४ )

एवं बाहुभ्यामधिरोहणेन । श्येनो ह्यन्यान् पक्षिणोऽभिलक्ष्य तद्धर्षणार्थं तेषां दुर्बलानां पक्षिणामुपर्यरत्निभ्यामुपस्तृत्य उपविशति । एवमेव च स वृक्षमभिनिविशते ।

एकविंशतिर्ह्येमानि प्रत्यञ्चि सुपर्णस्य पत्राणि भवन्ति । ( ऐ० आ० १।४।२)

लोके हि पक्षिणः पुच्छे प्रत्यङ्मुखानि पत्राणि एकविंशतिर्भवन्ति ।

एकेन ह वै पत्रेण सुपर्णस्योत्तरः पक्षो ज्यायान् । ( ऐ० आ० १ । ४ । २ )

लोके हि पक्षिण उत्तरपक्षे दक्षिणपक्षापेक्षया एकं पत्रमधिकं भवति (सायणः) ।

## ( १२ ) अध्यात्मविद्या ब्रह्मविद्या वा

पञ्चकाण्डात्मके ऐतरेयारण्यके हि द्वितीयस्य तृतीयस्य चारण्यकस्य ज्ञानकाण्डं विषयः, सा चोपनिषदित्यभिधीयत इति पूर्वमवोचाम । तदेवं ज्ञानकाण्डमेवास्य वस्तुतः प्रधानप्रतिपाद्य-विषयः । तत्र ग्रन्थविस्तरभिया ये चेतश्चमत्कारिणो हृदयहारिणो मौलिका वा विचारास्त एवात्र संगृह्यन्ते । तद्यथा—

अयमेव महान् प्रजापतिः । ( ऐ० आ० २ । १ । २ )

अयं पुरुषः ।

यावती वै द्यावापृथिवी तावानात्मा । ( ऐ० आ० १।३।८ )

उदरं ब्रह्मेति शार्कराक्ष्या उपासते । हृदयं ब्रह्मेत्यारुणयः । ( ऐ० आ० २ । १ । ४ )

शार्कराक्ष्याः शर्कराक्षनामकस्य महर्षेः पुत्राः । आरुणयोऽरुणाख्यस्य महर्षेः पुत्राः ।

एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः–"आहं मां देवेभ्यो वेद, ओ मद् देवान्वेद । इतःप्रदाना ह्येत इतःसंभृताः" इति । ( ऐ० आ० २ । १ । ८ )

आकारोऽभिविधौ । ओ । आकार उकारश्चेति पदद्वयम् । मदीयो महिमा देवानभि-व्याप्य देवानां च महिमा मामभिव्याप्य वर्तत इत्यर्थः । दार्शनिकदृष्ट्या आत्मनो देवानां चैकत्वमत्र ध्वन्यते । इतःप्रदानाः । इतोऽस्माल्लोकात्पुरोडाशादिप्रदानं येषां ते । अत एव इतःसंभृताः । एतल्लोकप्रदत्तहविषा हि ते पोषिता भवन्ति ।

इदं वै मूलमदस्तूलम् । अयं पितैते पुत्राः । ( ऐ० आ० २ । १ । ८ )

इदं जगतः कारणम् । मूलमुपादानकारणम् । अदः स्थावरजङ्गमात्मकं जगत् । तूलं कार्यम् । अयं निमित्तकारणभूतः पुरुषः । एते नानापदार्थाः ।

यो ह वा आत्मानं पञ्चविधमुक्थं वेद यस्मादिदं सर्वमुत्तिष्ठति स संप्रति-वित् । पृथिवी वायुराकाश आपो ज्योतींषीत्येष वा आत्मोक्थं पञ्चविधम् । एतस्माद्धीदं सर्वमुत्तिष्ठति, एतमेवाप्येति ।······

तस्मिन्योऽन्नं चान्नादं च वेदाहास्मिन्नन्नादो जायते भवत्यस्यान्नम् । आपश्च पृथिवी चान्नम् । एतन्मयानि ह्यन्नानि भवन्ति । ज्योतिश्च वायुश्चान्नादम् । एताभ्यां हीदं सर्वमन्नमत्ति । आवपनमाकाश आकाशे हीदं सर्वं समोप्यते ।·····

तस्मिन्योऽन्नं चान्नादं च वेदाहास्मिन्नन्नादो जायते भवत्यस्यान्नम् । ओषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादम् । ओषधिवनस्पतीन् हि प्राणभृतोऽदन्ति । तेषां य उभयतोदन्ताः पुरुषस्यानुविधां विहितास्तेऽन्नादा अन्नमितरे पशवः । तस्मात्त इतरान् पशूनधीव चरन्ति । अधीव ह्यन्नेऽन्नादो भवति । ( ऐ० आ० २ । ३ । १ )

पञ्चविधमुक्थम् । वक्ष्यमाणं पृथिव्याद्येवोक्थमिहाभिप्रेतम् 'यस्मादिदं सर्वमुत्तिष्ठति' इति व्युत्पत्तेः । संप्रतिवित् सम्यगभिज्ञः ।

तस्मिन् पृथिव्यादिभूतपञ्चके । आजायते ह । पुत्र इति शेषः । अपां पृथिव्याश्चान्नत्वम्, व्रीह्यादीनां भूम्युदकविकाररूपत्वात् । ज्योतिषो वायोश्चान्नादत्वम्, यतः प्राणवायुना जाठराग्नौ संदीपिते सत्येव सर्वोऽन्नजातं भक्षयति । समोप्यते सम्यगासमन्तात्प्रक्षिप्यते ।

तस्मिन् पृथिव्यादिपञ्चभूतकार्ये । पुरुषस्य विधामनु । मनुष्यस्य प्रकारमनुसृत्य । अधोभागे चोर्ध्वभागे च दन्तपङ्क्तियुक्ता अश्वादयो हि मनुष्यवदुभयतोदन्ताः । अधोभाग एव दन्तपङ्क्तियुक्ता गोमहिष्यादयस्तु 'इतरे पशवः' । अधीव चरन्ति । अधिका इव वर्तन्ते ।

य आत्मानमाविस्तरां वेदाश्नुते हाविर्भूयः। ओषधिवनस्पतयो यच्च किञ्च प्राणभृत्स आत्मानमाविस्तरां वेद। ओषधिवनस्पतिषु हि रसो दृश्यते, चित्तं प्राणभृत्सु। प्राणभृत्सु त्वेवाऽऽविस्तरामात्मा, तेषु हि रसोऽपि दृश्यते, न चित्तमितरेषु। पुरुषे त्वेवाऽऽविस्तरामात्मा, स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं सम्पन्नः। अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ। त एतावन्तो भवन्ति। यथाप्रज्ञं हि सम्भवाः। ( ऐं० आ० २। ३। २ )

आविस्तराम्। अतिशयेन प्रकटम्। भूय आविः। अतिशयेन प्रकटत्वम्। ओषधिवनस्पतयो यच्च किञ्च प्राणभृत्। एतदनन्तरम् एते उभये सच्चिदानन्दात्मकस्य जगत्कारणस्य सत्तामात्रमाविर्भावयतां मृत्पाषाणादीनामपेक्षया अतिशयेन तस्याविर्भावस्थानमिति यो निश्चिनोतीत्यध्याहारः। सच्चिदानरूपं हि जगत्कारणं मृत्पाषाणादिषु ओषध्यादिषु प्राणभृत्सु च क्रमेणात्मानमाविर्भावयतीति सारांशः।

आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमान् लोकानसृजत। अम्भो मरीचीर्मरमापः। अदोऽम्भः परेण दिवं द्यौः प्रतिष्ठा, अन्तरिक्षं मरीचयः, पृथिवी मरः, या अधस्तात्ता आपः।
( ऐं० आ० २। ४। १ )

'दिवं परेण' द्युलोकस्योपरि महर्लोकजनोलोकतपोलोकसत्यलोका ये सन्ति, या च 'द्यौः प्रतिष्ठा' सर्वेषां देवानामाश्रयभूतो द्युलोकः, 'अदोऽम्भः' एतत्सर्वमम्भःशब्दवाच्यम् (सायणः)।

आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमान् लोकानसृजत। अम्भो मरीचीर्मरमापः। अदोऽम्भः परेण दिवं द्यौः प्रतिष्ठा, अन्तरिक्षं मरीचयः, पृथिवी मरः, या अधस्तात्ता आपः। स ईक्षतेमे लोका लोकपालान्नु सृजा इति। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत्। तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम्। मुखाद्वाग् वाचोऽग्निः। नासिके निरभिद्येताम्, नासिकाभ्यां प्राणः, प्राणाद्वायुः। अक्षिणी निरभिद्येताम्, अक्षीभ्यां चक्षुः, चक्षुष आदित्यः। कर्णौ निरभिद्येताम्, कर्णाभ्यां श्रोत्रम्, श्रोत्राद्दिशः। त्वङ् निरभिद्यत, त्वचो लोमानि, लोमभ्य ओषधिवनस्पतयः। हृदयं निरभिद्यत, हृदयान्मनः, मनस-

श्चन्द्रमाः । नाभिर्निरभिद्यत, नाभ्या अपानः, अपानान्मृत्युः । शिश्नं निरभिद्यत, शिश्नाद्रेतः, रेतस आपः ॥ १ ॥

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन् । तमशनापिपासाभ्यामन्ववार्जत् । ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति । ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति । ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति । ताभ्यः पुरुषमानयत्ता अब्रुवन्सुकृतं बतेति पुरुषो वाव सुकृतम् । ता अब्रवीद्यथायतनं प्रविशतेति । अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन् । तमशनापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति । ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति । तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः ॥ २ ॥

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति । सोऽपोऽभ्यतपत् । ताभ्योऽभितप्ताभ्यो मूर्तिरजायत । या वै सा मूर्तिरजायतान्नं वै तत् । (ऐ० आ० २।४।१–३)

ईक्षत । ईक्षणं विचारं कृतवान् । 'दिवं परेण' द्युलोकस्योपरि महर्लोकजनोलोकतपोलोकसत्यलोका ये सन्ति, या च 'द्यौः प्रतिष्ठा' सर्वेषां देवानामाश्रयभूतो द्युलोकः, 'अदोऽम्भः' एतत्सर्वमम्भःशब्दवाच्यम् (सायणः)। अन्तरिक्षं मरीचयः, तस्य सूर्यमरीचीनामाधारत्वात् । पृथिवी मरः, भूलोकवर्तिनां प्राणिनां सहसा म्रियमाणत्वात् । पृथिव्या अधस्तात्पातालविशेषरूपा भोगभूमयः····तल्लोकवासिभिर्नागादिभिराप्यायमानत्वाद् 'आपः' इत्युच्यन्ते (सायणः)। पुरुषं पुरुषाकारं विराट्पिण्डम् । अमूर्छयत् कठिनमकरोत् । अभ्यतपद् अभितः पर्यालोचितवान् । यथाण्डम् । यथा पक्ष्यादीनां पक्वमण्डं भिन्नं भवति तद्वत् । प्राणो घ्राणेन्द्रियम् । अक्षीभ्यामित्यस्य स्थाने 'अक्षिभ्याम्' इति पाठान्तरम् । लोमानि । लोमशब्देन तदाधारभूतत्वङ्निष्ठं स्पर्शनेन्द्रियमुच्यते । अपानोऽधःसंचारी वायुः । रेतो गुह्येन्द्रियम् ॥ १ ॥

महत्यर्णवे । समुद्रवदत्यन्तविस्तृते विराड्देहे । 'तं' सर्वेन्द्रियनद्देवताधिष्ठानभूतं विराड्देहम् । अन्ववार्जत् । अनुगमितवान्, संयोजितवानिति यावत् । अभिप्रजानीहि स्वार्थं स्थानविशेषमनुगृहाण । हविर्गृह्यते । भोग्यं वस्तु समर्प्यते ॥ २ ॥

अपः । जलप्रधानानि पञ्चभूतानीति सायणः ।

स ईक्षत कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या इति । स ईक्षत यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति । स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम् । तस्य त्रय आवसथास्त्रयः स्वप्नाः, अयमावसथोऽयमावसथोऽयमावसथ इति । ( ऐ० आ० २।४।३ )

भोगाधिष्ठानभोगसाधनभोग्यभोगानां सृष्टिं पूर्वमभिधाय भोगस्वामिनं दर्शयितुमीश्वरस्येक्षणमत्र प्रस्तूयते । मदृते । भोगस्वामिनं जीवरूपं मां विना । यथा हि नगरस्वामिनं राजानमन्तरेण पुरस्य वा पौरजनानां वा रचना न शोभते, तथैव भोगस्वामिनं जीवरूपधारिणमीश्वरमन्तरेण उपर्युक्तभोगाधिष्ठानादे रचनापि न शोभावहा, अतो जीवरूपस्येश्वरस्यापि देहे प्रवेश आवश्यकः । एतदेवोक्तम्—'स ईक्षत कथं न्विदं मदृते स्यादिति' इत्यनेन ।

कतरेण मार्गेण । प्रपद्यै प्रविशानि । अथ कोऽहमिति । मां स्वामिनमनपेक्ष्य यदि वागादयोऽभिवदनादिव्यापारेषु स्वतन्त्राः स्युस्तदानीम् 'अहं कः' नाम स्याम्, न कोऽपि भवेयमिति भावः । एतमेव सीमानम् । मूर्धमध्यभागस्थं कपालसंबन्धिरूपं सीमानं स्थानविशेषम् । प्रापद्यत । देहमध्ये प्राविशत् । नान्दनम् । तेन द्वारेण निर्गतस्य ब्रह्मलोकप्राप्तिद्वारा मुच्यमानत्वादानन्दहेतुत्वेन तद् द्वारं नान्दनमित्युच्यते । त्रय आवसथाः । नेत्रकण्ठहृदयाख्यानि स्थानानि । त्रयः स्वप्नाः । स्वप्नसुषुप्तिजागरणावस्थाः । जागरणसुषुप्त्योरपि विद्यमानस्य ब्रह्मतत्त्वस्य तिरोधानादन्यथाभूतस्य जीवतत्त्वस्य चावभासात् स्वप्नतुल्यत्वात् स्वप्नत्वम् ।

यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म । ( ऐ० आ० २।६।१ )

प्रज्ञानेत्रम् । नीयते सर्वं जगदनेनेति नेत्रम्, प्रज्ञैव नेत्रं यस्य तत् । प्रज्ञा चैतन्यम् ।

अदितिर्हीदं सर्वं यदिदं किञ्च पिता च माता च पुत्रश्च प्रजननं च । तदप्येतदृषिणोक्तम्—"अदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः" [ ऋ० १।८९।१० ] इति ।

( ऐ० आ० ३।१।६ )

प्रजननम् पुत्रोत्पादनम् ।

तस्यैतस्य त्रयस्य—अस्थ्नां मज्ज्ञां पर्वणामिति त्रीणीतः षष्टिशतानि, त्रीणीतः । तानि सप्तविंशतिशतानि भवन्ति । सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः । स एषोऽहःसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतमहःसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाह्नां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति । (ऐ० आ० ३।२।१)

त्रयस्य अस्थिमज्जपर्वरूपस्य तन्मयस्य पुरुषशरीरस्येति यावत् । इतो दक्षिणपार्श्वे । इतो वामपार्श्वे । त्रीणि शतानि षष्टिश्च पुरुषशरीरस्य प्रतिपार्श्वं शकलविशेषाः । अहःसंमानः । संख्यया संवत्सरगताहोरात्रपरिमितः । संमानः समानपरिमाणः । संवत्सरगताहोरात्रसंमानत्वमत्रात्मनः प्रतिपाद्यते ।

तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति पञ्चेतश्चत्वारिंशच्छतानि पञ्चेतः, तदशीतिसहस्रं भवति । अशीतिसहस्रं वा अर्कलिनः । (ऐ० आ० ३।२।२)

अत्र सायणः—"अस्थिमज्जपर्वणां यदेतत् त्रयमस्ति 'तस्यैतस्य त्रयस्य' गणनायां कृतायामशीत्यधिकसहस्रं संपद्यते । तद्यथा—अस्थिमज्जपर्वणां प्रत्येकं षष्ट्यधिकशतत्रये सति त्रीणि शतत्रयाणि मिलित्वा नव शतानि संपद्यन्ते । षष्टीनां त्रयं मिलित्वा अशीत्यधिकं शतं भवति। तदेवमशीत्युत्तरं सहस्रम् । एतच्च शरीरस्य पार्श्वद्वये विभज्य योजनीयम् । तथा योजनायाम् 'इतः' दक्षिणपार्श्वे 'पञ्च शतानि चत्वारिंशत्' च भवन्ति। पुनरपि 'इतः' वामपार्श्वे 'पञ्च शतानि चत्वारिंशत्' च भवन्ति। एवमशीत्यधिकसहस्रसंपत्तौ सत्यां तत्संख्योपेतास्थ्यादिमतः पुरुषस्यादित्यरूपत्वं संपद्यते । अर्के लीयन्त इति 'अर्कलिनः' आदित्यस्य रश्मयः ।"

चत्वारः पुरुषा इति बाध्वः । शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति । शरीरपुरुष इति यमवोचाम स य एवायं दैहिक आत्मा । तस्य योऽयमशरीरः प्रज्ञात्मा स रसः । छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव । तस्यैतस्याकारो रसः । वेदपुरुष इति यमवोचाम येन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदम् । तस्यैतस्य ब्रह्मा रसः । तस्माद् ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत् । महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्येकया भावयन्नन्यानि । तस्यैतस्यासावादित्यो रसः । स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् ।

····· एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते, एतमग्नावध्वर्यवः, एतं महाव्रते छन्दोगाः। एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते। स एष संवत्सरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा। ( ऐ० आ ३।२।३ )

रसः सारः। ब्रह्मिष्ठम्। अतिशयेन वेदत्रयगतम्। संवत्सरः कालात्मा। ऐक्या प्रध्वंसयन्। स्वस्वकारणेन सहैक्यं यथा प्रतिपद्यन्ते तथा विनाशयन्। भावयन् उत्पादयन्। अत्र वृक्षरससादृश्येन तस्य तस्य रसत्वं बोध्यम्, तथा च यथा लोके वृक्षः स्वनिष्ठेन रसेन पूर्णः शोभते, एवमेते शरीरपुरुषादयो यथोक्तै रसैः पूर्णाः शोभन्ते ( सायणः )।

एतं परमात्मानम्। महत्युक्थे प्रौढे शस्त्रे। अस्यां पृथिव्याम्। संवत्सरसंमानः। संवत्सररूपकालात्मसदृशः ( सायणः )।

स य एवमेतं संवत्सरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसति दुग्धदोहा अस्य वेदा भवन्ति, न तस्यानूक्ते भागोऽस्ति, न वेद सुकृतस्य पन्थानमिति। ( ऐ० आ० ३।२।३–४ )

दुग्धदोहाः। दोहस्य क्षीरस्य पूर्वमेव निःसारितत्वान्निष्फलाः। तस्य परार्थं शंसनं कृतवतः पुरुषस्य। अनूक्ते। गुरूपदेशमनु पठिते वेदे। अत्र "यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतत्" [ ऐ० आ० ३।२।३ ] इत्येवं संवत्सरसंमानत्वेनात्मन उपासकेन परकीये यागे तच्छंसनं निन्द्यत इति सायणः। वस्तुतस्तु स्वयमेवोपासनया परमात्मतत्त्वस्य साक्षात्कारो विधेय इत्यभिप्रायेणैव तस्यात्मनः परस्मै शंसनमत्र निषिध्यते। तथा च श्रुतिः—"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" [ कठोप० १।२।२२ ] इति।

स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम। तौ यत्र विहीयेते चन्द्रमा इवादित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति, लोहिनी द्यौर्भवति यथा मञ्जिष्ठा, व्यस्तः पायुः, काककुलायगन्धिकमस्य शिरो वायति, संपरेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात्। स यत्करणीयं मन्येत तत्कुर्वीत; "यदन्ति यच्च दूरके" [ ऋ० ९। ६७। २१–२७ ] इति सप्त जपेत्, "आदित्प्रत्नस्य रेतसः" [ ऋ० ८।

६ । ३० ] इत्येका, "यत्र ब्रह्मा पवमान" [ ऋ० ९ । ११३ । ६–११ ] इति षट्, "उद्वयं तमसस्परि" [ ऋ० १ । ५० । १० ] इत्येका । अथापि यत्र च्छिद्र इवादित्यो दृश्यते रथनाभिरिवाभिख्यायेत, च्छिद्रां वा छायां पश्येत्तदप्येवमेव विद्यात् । अथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं वात्मानं पश्येत्, विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयातां तदप्येवमेव विद्यात् । अथाप्यपिधायाक्षिणी उपेक्षेत तद्यथा बटरकाणि सम्पतन्तीव दृश्यन्ते तानि यदा न पश्येत्तदप्येवमेव विद्यात् । अथाप्यपिधाय कर्णा उपशृणुयात्स एषोऽग्नेरिव प्रज्वलतो रथस्येवोपब्दिस्तं यदा न शृणुयात्तदप्येवमेव विद्यात् । अथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा । अमेघे वा विद्युतं पश्येत्, मेघे वा विद्युतं न पश्येत्, महामेघे वा मरीचीरिव पश्येत तदप्येवमेव विद्यात् । अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यात् । इति प्रत्यक्षदर्शनानि । अथ स्वप्नाः । पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति, वराह एनं हन्ति; मर्कट एनमास्कन्दयति, आशु वायुरेनं प्रवहति, सुवर्णं खादित्वाऽपगिरति, मध्वश्नाति, बिसानि भक्षयति, एकपुण्डरीकं धारयति, खरैर्वराहैर्युक्तैर्याति, कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति । स यद्येतेषां किञ्चित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वान्येनान्नेन ब्राह्मणान्भोजयित्वा चरुं स्वयं प्राश्नीयात् । स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः स म आत्मेति विद्यात् । ( ऐ० आ० ३ । २ । ४ )

प्रज्ञात्मा जीवः । एकमेतत् । एकमेव तत्त्वम् । तौ यत्र विहीयेते । तौ आदित्यस्वशरीरपुरुषौ यदा वियुक्तौ भवतः । यदा तयोः परस्परं संबन्धस्य स्वभावतः सिद्धा स्थितिर्विच्छिद्यत इति भावः । तस्यामवस्थायां यानि लिङ्गानि तत्तदरिष्टरूपेण प्रादुर्भवन्ति तान्येवाधो विशदीक्रियन्ते । रश्मय उष्णरश्मयः । व्यस्तो विवृतः । संकोचयितुं न शक्यत इति यावत् । काककुलायगन्धिकम् । काकस्य नीडे यादृशो गन्धस्तादृशदुर्गन्धोपेतं शिरः । वायति स्वकीयं दुर्गन्धं दूरदेशे प्रसारयति । संपरेतो मृतः । करणीयं लौकिकं वैदिकं वा कर्तव्यविशेषम् । छिद्रः छिद्रोपेतः । आख्यायेत प्रतीयेत । छिद्रां छायाम् । सच्छिद्रां स्वदेहच्छायाम् , एवमेव । 'संपरेतः' इत्यारभ्य 'तमसस्परीत्येका' इत्यन्तेन ग्रन्थेनोक्तप्रकारमेव । जिह्मशिरसं · कुटिलशिरस्कम् । कन्याके कनीनिके । जिह्मेन वक्रत्वेन । बटरकाणि वर्तुलानि सूक्ष्माणि शुक्लवर्णानि केशोण्डुक-

शब्दाभिधयानि। उपद्रिर्षोपः। महामेघः सर्वत्रान्धकारमापादयन् प्रौढो मेघः। प्रत्यक्षदर्शनानि। जागरणावस्थायां प्रत्यक्षेण दृश्यमानान्यरिष्टानि। अपगिरति वमति। एकपुण्डरीकम्। रक्तवर्णमिति संप्रदायः (सायणः)। नलदमाली। रक्तकुसुमग्रथितस्रग्वी। स्थालीपाकं स्थालीपाकविधानोपेतम्। रात्रीसूक्तम्। "रात्री व्यख्यदायती" [ऋ० १०।१२७।१] इत्यादिसूक्तम्। अन्येनान्नेन। स्वगृहे निष्पादितेन। चरुं होमशेषम्। 'सः' उपरिनिर्दिष्टविधिना कृतविघ्नपरिहारः पुमान् 'योऽतः ···· स म आत्मा' इत्येवं 'विद्यात्'। 'अतः' अस्माद्देहेन्द्रियादिसंघातात्। विलक्षण इति शेषः। अनतः स्वतन्त्रत्वात् केनापि न वशीकृतः।

> एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे। वाचि हि प्राणं जुहुमः प्राणे वा वाचम्। यो ह्येव प्रभवः स एवाप्ययः। (ऐ० आ० ३।२।६)

कावषेयाः कवषस्य पुत्राः। प्रभव उत्पत्तिहेतुः। अप्ययो लयहेतुः। अत्रायं भावः– ब्रह्मतत्त्वं साक्षात्कृतवतो विदुषो नास्ति यागैरध्ययनेन वा किञ्चित्प्रयोजनम्। तस्य तु वाक्प्राणयोः परस्परं होम एव यागस्थानीयः। तथा च भाषणकाले वह्निस्थानीयायां वाचि प्राणरूपं होमद्रव्यं हूयते, तूष्णीम्भावे तु प्राणाख्ये वह्नौ वाग्रूपं होमद्रव्यं हूयते। तदेवं वाक्प्राणयोः परस्परं क्रमेण उत्पत्तिहेतुत्वं लयहेतुत्वं च सम्पद्यते।

> तदिति वा एतस्य महतो भूतस्य नाम भवति। योऽस्यैतदेवं नाम वेद ब्रह्म भवति ब्रह्म भवति। (ऐ० आ० ५।३।३)

एतस्य महतो भूतस्य। नित्यसिद्धस्य परमात्मनः।

## १३ प्रकीर्णकम्

अस्मिन्नन्तिमे प्रकीर्णकाख्ये प्रकरणे ये केचिदवशिष्टाः प्रसङ्गागताः कथमपि रोचका विचारास्त एव संगृह्यन्ते। तद्यथा—

> अनूचीं वै नावमधिरोहन्ति। (ऐ० आ० १।२।४)

लोके नौर्यदा पश्चिमतीरेऽवस्थाय प्राचीनतीरं गच्छति तदानीं जना अपि पश्चिमतीरेऽवस्थाय प्राङ्मुखा अधिरोहन्ति। तदिदं नावोऽन्वगारोहणम्।

( तदेतत् सहस्रं ) तत्सर्वम् । तानि दश दशोति वै सर्वम् । एतावती हि संख्या । दश दशतस्तच्छतम् । दश शतानि तत्सहस्रम् । तत्सर्वम् ।

( ऐ० आ० २ । ३ । ४ )

दशत् । दशानां समूह इत्यर्थः । "पञ्चद्दशतौ वर्गे वा" [ पाणि० सू० ५ । १ । ६० ] इति सूत्रात् । तत्सर्वम् । सर्वं हि संख्याजातं दश-शत-सहस्ररूपेषु संख्यापर्वस्वन्तर्भवतीति भावः ।

तिर इव ह्यशरीरम् । ···· आविर्हि शरीरम् । ( ऐ० आ० २।३।६ )

आत्तं वै भूयसा कनीयः । ( ऐ० आ० २।३।६ )

आत्तं व्याप्तम् ।

तदाहुर्यदनेन रूपेणामुं लोकमभिसंभवती३ँ । अथ केन रूपेणेमं लोकमाभवती३ँ । तद्यदेतत् स्त्रियां लोहितं भवत्यग्नेस्तद्रूपं तस्मात्तस्मान्न बीभत्सेत, अथ यदेतत्पुरुषे रेतो भवत्यादित्यस्य तद्रूपं तस्मात्तस्मान्न बीभत्सेत । सोऽयमात्मेममात्मानममुष्मा आत्मने संप्रयच्छति, असावात्माऽमुमात्मानमिमस्मा आत्मने संप्रयच्छति । तावन्योन्यमभिसंभवतः । अनेनाह रूपेणामुं लोकमभिसंभवति, अमुतो रूपेणेमं लोकमाभवति ।

तत्रैते श्लोकाः—

यदक्षरं पञ्चविधं समेति युजो युक्ता अभि यत्संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥ १ ॥
यदक्षरादक्षरमेति युक्तं युजो युक्ता अभि यत्संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥ २ ॥
यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु ।
तद्विपूया कवयो अन्वविन्दन् नामायत्ता समतृप्यञ्छ्रुतेऽधि ॥ ३ ॥
यस्मिन्नामा समतृप्यञ्छ्रुतेऽधि तत्र देवाः सर्वयुजो भवन्ति ।
तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं लोकमप्येति विद्वान् ॥ ४ ॥

नैनं वाचा स्त्रियं ब्रुवन् नैनमस्त्रीपुमान्ब्रुवन् ।
पुमांसं न ब्रुवन्नेनं वदन् वदति कश्चन ॥ ५ ॥

( ऐ० आ० २।३।७-८ )

अनेन रूपेणामुं लोकमभिसंभवती३ँ । प्राणदेवोऽस्मीति ध्यानेन हिरण्यगर्भरूपं प्राप्नोतीति प्रकृतोऽर्थः । तन्निश्चयद्योतनार्था प्लुतिः । इमं लोकमाभवती३ँ । मनुष्यलोकं प्राप्नोति । विचारार्था प्लुतिः । तदाहुरित्यनेन प्रश्नोऽयमिति दर्शयति । अयमात्मा स्त्रीदेहः । इममात्मानम् । स्त्रीदेहसंबन्धिनं त्वगसृङ्मांसरूपभागम् । अमुष्मै आत्मने । पुरुषसंबन्धिने मेदोऽस्थि-मज्जाभागाय । असावात्मा उपरितनः पुरुषदेहः । अमुमात्मानम् । स्वकीयमेदोऽस्थिमज्जा-भागम् । इमस्मा आत्मने । अधोवर्तिस्त्रीसंबन्धित्वगसृङ्मांसभागाय ।

अक्षरं प्राणदेवः । पञ्चविधं पञ्चभूतकार्यात्मकं शरीरम् । समेति । शरीरमध्ये वर्तत इत्यर्थः । युजः । युज्यन्ते शरीराख्यरथे इति युज इन्द्रियाश्वाः । 'यत्र' शरीरे 'सत्यस्य' प्राणदेव-तारूपस्य 'सत्यम्' परब्रह्मस्वरूपम् 'अनुयुज्यते' प्राणदेवतामनु शरीरेऽवस्थाप्यते । देवाः । वागा-द्यभिमानिनोऽग्न्यादिदेवाः । एकं भवन्ति, एकत्वं प्रतिपद्यन्ते ॥ १ ॥ अक्षरात् । परमात्मन उत्पन्नः । अक्षरम् । व्यवहारकाले बाधरहितः प्राणः ॥ २ ॥ उल्बणिष्णु । अत्युल्बणं वाचः स्वरूपमाक्रोशादिकम् । वियूय परित्यज्य । श्रुते । श्रुतिप्रोक्ते परमतत्त्वे । समतृप्यन् । तृप्तिमधि-गताः ॥ ३ ॥ नामा नाम । सर्वयुजः । सर्वेणापि प्रकारेण युक्ताः ॥ ४ ॥ एनं प्राणदेवं परमा-त्मानं वा स्त्रीरूपेण पुंरूपेण नपुंसकरूपेण वा न तस्य वर्णनं कर्तुं शक्यते इत्यत्र भावः ॥५॥

तदुतापि यत्रैतद्बलवदनूद्गृह्णन् संदधदहोरात्रे वर्षति, द्यावापृथिव्यौ समधातामित्युताप्याहुः । ( ऐ० आ० ३।१।२ )

उतापि—इति निपातसमुदायः समुच्चयवाची लोकप्रसिद्धिं समुच्चिनोति । यत्र यदा । एतत्पर्जन्यस्वरूपम् । अनूद्गृह्णन् उद्ग्रहणं वृष्ट्युपसंहारमकुर्वन्नित्यर्थः । समधाताम् संधानं परस्परैक्यं प्राप्तवत्यौ ।

न त्वेवान्यत् कुशलाद् ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रूयात् । नाति-शुभ्रे चन ब्राह्मणं ब्रूयात् , नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डूकेयः ।

( ऐ० आ० ३।१।३ )

ब्राह्मणं प्रति शापदानं कदा कर्तव्यं कदा न कर्तव्यमित्ययमत्र विषयः। अतिद्युम्न एव ब्राह्मणं ब्रूयात्। अतिशयितं द्युम्नं धनम् अतिद्युम्नम्; तस्मिन्नेव विषये विघ्नातकं शत्रुं ब्राह्मणं शपेत् न त्वल्पविषये (सायणः)। चनशब्दोऽप्यर्थे। ब्रूयात् शपेत्।

## (अवरपरा संहिता)

वाक्प्राणेन संहितेति कौण्ठरव्यः, प्राणः पवमानेन, पवमानो विश्वैर्देवैः, विश्वे देवाः स्वर्गेण लोकेन, स्वर्गो लोको ब्रह्मणा। सैषाऽवरपरा संहिता। स यो हैता-मवरपरां संहितां वेदैवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन संधी-यते यथैषा संहिता। (ऐ० आ० ३।१।६)

वाक् प्राणेन संहिता संयुक्ता। वाचः प्राणेन प्रेर्यमाणत्वात्। पवमानेन बाह्यवायुना। ब्रह्मणा वेदेन (सायणः)। अवरपरा। अवरैः पूर्वपूर्वमभिहितैः परैरुत्तरोत्तरमभिहितैश्च पदार्थै-र्युक्तत्वात्।

भरद्वाजो ह वा ऋषीणामनूचानतमो दीर्घजीवितत्तमस्तपस्वितम आस।

(ऐ० आ० १।२।२)

विश्वस्य ह वै मित्रं विश्वामित्र आस। (ऐ० आ० १।२।२)।

तस्येदं विश्वं मित्रमासीद् यदिदं किञ्च। (ऐ० आ० २।२।१)

इति श्रुतिविमर्शे महानिबन्धे 'ऐतरेयारण्यक आचारविचाराः'
अथवा 'ऐतरेयारण्यकपर्यालोचनम्' नाम
द्वितीयो निबन्धः।

---

# वैदिकस्वाध्यायमन्दिरग्रन्थावल्याः

## प्रकाशितग्रन्थानां सूची

### ( संस्कृते )

( १ ) ऋग्वेदप्रातिशाख्यम्, उवटाचार्यकृतभाष्येण सहितम् । प्रकाशकः—इंडियन प्रेस लिमिटेड, इलाहाबाद ।

( २ ) उपनिदानसूत्रम् ( सामवेदीयम् ) । प्रकाशकः—गवर्नमेंट प्रेस, इलाहाबाद ।

( ३ ) आश्वलायनश्रौतसूत्रम् ( सिद्धान्तिभाष्यसहितम् ) प्रथमो भागः । प्रकाशकः—पूर्ववत् ।

( ४ ) ऐतरेयपर्यालोचनम् (प्रवन्धप्रकाशनामकग्रन्थस्य द्वितीयभागे प्रकाशितम्) । प्रकाशकः—इंडियन प्रेस लिमिटेड, इलाहाबाद ।

### ( हिन्दी-भाषायाम् )

( ५ ) वेदों का वास्तविक स्वरूप, अथवा—वेदों के महान् आदर्श । प्राप्तिस्थान—श्रीमोतीलाल बनारसीदास, बुकसेलर्स, चौक, बनारस ।

### ( इंग्लिश-भाषायाम् )

( ६ ) ऋग्वेदप्रातिशाख्यम् । English Translation, Critical Notes, Appendices etc. प्रकाशकः—श्रीमोतीलाल बनारसीदास, बुकसेलर्स, चौक, बनारस ।

प्राप्तिस्थानम्—

श्री मोतीलाल बनारसीदास,

बुकसेलर्स, चौक, बनारस ।